श्रीः ।

# विवादचिन्तामणिः ।

( धर्मशास्त्रे व्यवहारविषये )

श्रीमन्महामहोपाध्याय विद्वन्मणिमुकुट
पं० वाचस्पतिविरचितः ।

स च

खेमराज श्रीकृष्णदास इत्यनेन
मुम्बय्यां
स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशितः ।

संवत् १९५५, शके १८२०.

# प्रस्तावना ।

इहखलु धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु मोक्ष एव परमः पुरुषार्थः । सचमोक्षः निरतिशयनित्यानन्दात्मक एव नान्यथा । इतरेच न तथा सुखाधायकाः । किंतु परंपरया मोक्षहेतवो भवन्ति । यथाकथं चित्सुखाधायकत्वमात्रेण पुरुषार्थत्वोक्तिरेतेषाम् । आस्तांतावत्प्रकृतमनुसरामः ।

तत्र चोदनालक्षणस्य धर्मस्य प्रवृत्तिनिवृत्तिरूपेण द्वैविध्यम् । तत्रान्त्यस्य मोक्षंप्रति मुख्यत्वम् । आद्यस्य धर्मस्य लोकानां हितप्राप्त्यहितनिवृत्त्युपयोगित्वेन । तादृशाहितनिवृत्तिर्हितप्राप्तिश्च लोकानां भिन्नभिन्नरुचित्वात्परस्परविरुद्धप्रवृत्तिनिवृत्तिभ्यां परस्परमुच्छिन्नास्यात् । तत्परिहाराय महर्षयस्तत्तद्देशकालानुसारेण नानाधर्मशास्त्राख्यस्मृतिनिबन्धनानि लोकहितायच विस्तरेण निबबन्धुः । तत्तत्स्मृतिषु पृथक्पृथगुक्तान् विशकलितानर्थानेकीकृत्याऽन्यानपि महाधर्मनिबन्धान्दीनानुकम्पिनोमहान्तस्तत्तत्स्मृत्युक्तमार्गोल्लेखपुरस्सरं निबबन्धुः ।

तेष्वन्यतमोऽयं सकलशास्त्रपारंगतमज्ञेन श्रीकृत्यकल्पद्रुमपारिजातादिमहाधर्मनिबन्धपारावारपारीणधिषणाविशेषेण विद्वज्जि[illegible]वाचस्पतिना महामहोपाध्यायेन विवादचिन्तामणिनामा महानिबन्धः महता प्रयासेन राजकीयव्यवहारेषु लोकव्यवहारेषुच संभवतामपायानामुपायानां न्यायानामन्यायानां च विवेकाय न्यबन्धि ।

सरस्वतीविलासविवादभङ्गार्णवमिताक्षरादिमहानिबन्धेषु सत्स्वपि सुललितेनानेन यथालोके राज्ञां राजकीयानां महतां सामान्यानां पण्डितानांच सूत्ररूपेणग्रथनादुपयोगोऽसकृद्भवेन्न तथा तेभ्य इति विदितंभवत्तदेतत्सारज्ञानाम् ।

तथाभूतस्यास्य ग्रन्थस्योत्तमपत्रेषूत्तमसीसकाक्षरैस्सम्यगस्मदीयपण्डितद्वाराशोधयित्वा लोकोपकाराय स्वकीये " श्रीवेङ्कटेश्वर " मुद्रणालये मुद्रापणेन प्रकाशितत्वाल्लोके सर्वत्रैतद्ग्रन्थस्य प्रसरणंझटितिभवेदेव ।

तस्मादेतद्ग्रन्थकर्तुश्श्रमस्सफलीभूय राज्ञां राजकीयानां लोकानां च हिताहितप्राप्तिपरिहारद्वारा परमसुखप्रापकत्वेन श्रीवेङ्कटेश्वरस्सम्यक् प्रसन्नो भूत्वा ग्रन्थकर्तुरस्माकं च श्रेयांस्यभिवर्द्धयेदेव ।

किंबहुना अहो महान्तःएवंप्रयासेनग्रन्थानुपलभ्यमुद्रापणेनलोकहिताचरणेप्रवृत्तायमह्यं मुद्रापणमात्रोपयुक्तात्यल्पैतन्मूल्यद्रव्यदानेन पुस्तकायुपलभ्यतदवलोकनतदर्थानुसन्धानादिभिः परमसन्तुष्टचित्तास्सन्त आशीराशासनेनच मां श्रीमन्तः कृपाभाजनं कुरुतेत्यभ्यर्थये ।

विद्वज्जनकृपाभिलाषी–

**खेमराज श्रीकृष्णदास,**

**"श्रीवेङ्कटेश्वर" मुद्रणालयाध्यक्ष–मुंबई.**

श्रीः ।

# विवादचिन्तामण्यनुक्रमणिकाप्रारंभः ।





इति विवादचिन्तामण्यनुक्रमणिकासमाप्ता ।

श्रीः ।

# अथ विवादचिन्तामणिः ।

श्रीगणेशाय नमः ।

क्षीराब्धेरुज्जिहानां त्रिदशपरिषदि प्रोल्लसद्भ्रूविभङ्गी-
मङ्गीकुर्वन्कटाक्षैस्त्रिभुवजननीं व्रीडयानम्रमौलिः ।
देवः पायादपायात्कुसुमशरपरीरम्भसञ्जातभावः
सद्यः स्विद्यत्तरेण स्मितकमलमुखीमाददानः करेण ॥ १ ॥

श्रीकृत्यकल्पद्रुमपारिजातरत्नाकरादीनवलोक्य यत्नात्
वाचस्पतिः श्रीपतिनम्रमौलिर्विवादचिंतामणिमातनोति

## अथ विवादपदानि ।

तत्र मनुः—

तेषामाद्यमृणा[1]दानं निक्षे[2]पोऽस्वामि[3]विक्रयः ।
सम्भूय च समुत्था[4]नं दत्तस्याऽनपक[5]र्म च ॥
वेतनस्यैव चाऽऽदा[6]नं संविदश्च व्य[7]तिक्रमः ।
क्रयविक्रयाऽनुशयो विवादः[8] स्वामिपालयोः ॥
सीमाविवादं[10] धर्मश्च पारुष्ये दं[11]ण्डवा[12]चिके ।
स्ते[13]यं च साहं[14]सं चैव स्त्रीसंग्रह[15]णमेव च ॥
स्त्रीपुंसयोर्विभा[16]गश्च द्यूत[17]मा[18]ह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥

## अथर्णादानम् ॥ १ ॥

तत्र नारदः—

ऋणं देयमदेयं च येन यत्र यथा च यत् ।

दानग्रहणधर्माश्च ऋणादानमिति स्मृतम् ॥
स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते ।
तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम् ॥

स्थानमवस्थानं मूलधनस्य तस्मिन्सत्येव लाभो वृद्धिः तदर्थं दानग्रहणम् । इमे कर्मव्युत्पन्ने । तेन मूलाऽस्थान एव लाभनिमित्तं धनिकेन दत्तमधमर्णेन तथाऽभ्युपेत्य गृहीतमृणमित्यर्थः । कलाशून्यत्वे तुल्यत्वाद्गौणः प्रयोगः । नहि तेन वृत्तिर्गुणश्चावश्यापाकरणीयत्वमिति।न्यायचतुर्थाध्याये व्यक्तम् । यस्यैव दानं तस्यैव तत्सजातीयस्यैव वा ग्रहणम् । अत एव वाणिज्यार्थप्रयुक्तस्यापि नर्णत्वम्–

तत्प्राप्तिहेतुमाह बृहस्पतिः–
कुत्सितात्सीदतश्चैव निर्विशंकैः प्रगृह्यते ।
चतुर्गुणं वाऽष्टगुणं कुसीदाख्यमृणं ततः ॥

वाकारोऽनास्थायाम् ।

कात्यायनः–
न स्त्रीभ्यो दासबालेभ्यः प्रदद्यात्किञ्चिदुद्धृतम् ।
दाता न लभते तत्तु तेभ्यो दत्तं तु यद्वसु ॥

उद्धृतमुद्धारः ।

तत्र प्राप्तिहेतुमाह बृहस्पतिः–
परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा धनं दद्याद्धनी सदा ॥

यथाविश्वासमेतेषां करणम् । अयमुपदेशः । आधिर्भोग्यः । बन्धोत्र भोगलाभादन्यतःसुवर्णादि । अतो भेदः ।

किंरूपो लाभः तत्र मनुः—

वशिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम् ।
अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शते ॥

वशिष्ठः—

वशिष्ठवचनप्रोक्तां वृद्धिं वार्द्धुषिके शृणु ।
पञ्चमाषांस्तु विंशत्यामेवं धर्म्मो न हीयते ॥

विंशतिः पलानां माषः । तत्र बृहस्पतिः—

माषो विंशतिभागस्तु पलस्य परिकीर्त्तितः ।

माषोऽत्र षोडशरक्तिकः । तेन चतुःसुवर्णपरिमितपलविंशतितमे माषे षोडशरक्तिकावच्छिन्नमाषपञ्चतयेन सुवर्ण एको वृद्धिर्भवति । स च विंशतिपलस्याशीतितमो भागो भवति । एवमशीतिभागो लाभो भवति । मनूक्ते तु सुवर्णशते मासेन विंशतिरक्तिकाधिकः सुवर्ण एको वृद्धिर्भवति । तत्रापि सबन्धक एवेयं वृद्धिः ।

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।

इति विशेषपरत्वमेव याज्ञवल्क्यवचनात् ।

एवं व्यासोपि—

सबन्धे भाग आशीतः साष्टभागः सलग्नके ।

निराधाने द्विकशतं मासि लाभ उदाहृतः ॥

आशीतः अशीतितमःसाष्टभागः अशीतितमभागस्याष्टमेन भागेन सहितोऽशीतितमभागः । तेन विंशतिपलमिते हेम्नि मासे नवरक्तिकात्मिका वृद्धिः । निराधाने लग्नकबन्धशून्ये द्विकं शतं शतसुवर्णेषु मासेन द्वौ सुवर्णौ वृद्धिः । ब्राह्मणस्यैतन्न वर्णान्तरस्य ।

तथाच मनुः–

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥
द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी ।

सबन्धकादावप्येवं वर्णक्रमेणोत्कर्षः । तेन ब्राह्मणे या वृद्धिः सा क्षत्रिये सार्द्धा वैश्ये द्विगुणा शूद्रे सार्द्धद्विगुणा । एतन्मनुवाक्यादुक्तप्रकारवृद्धिग्रहणे वैश्यस्य तथा आपदि ब्राह्मणादीनामपि नाऽधर्मः । अतिरिक्तकारितादिवृद्धिग्रहे तु पीडाकरत्वादधर्मः । अनापदि तु वैश्येतरेषां त्रयाणामुभयथाप्यधर्म्मः ।

हारीतः–

पुराणपंचविंशत्यां मासेष्टपणावृद्धिः ॥

एवं सद्भिमासैश्चतुर्भिर्वर्षैर्द्धित्वमायातं सन्तिष्ठेत ।

एषा धर्म्मवृद्धिर्नानया धर्माच्च्यवते । एवं पञ्चाशता मासैर्द्विगुणीभूतं ततो न वर्द्धते धनमित्यर्थः ॥

वृद्धिः कायाः कतिविधा चेति तत्राह बृहस्पतिः–

वृद्धिश्चतुर्विधा प्रोक्ता पंचधान्यैः प्रकीर्त्तिता ।
षड्विधाऽन्यैः समाख्याता तत्त्वतस्तां निबोधत ॥
कायिका कालिका चैव चक्रवृद्धिस्तथा परा ।
कारिताऽथ शिखावृद्धिर्भोगलाभस्तथैव च ॥

व्यासः—

दोह्यवाह्यकर्मसंयुता कायिका समुदाहृता ॥

नारदः—

कायाविरोधिनी शश्वत्पणाद्धर्द्याद्या तु कायिका ॥

कायो मूलं तदविरोधिनी तन्न विनाशयति शश्वत्प्रत्यब्दं देया पणतदर्द्धादिरूपा । पणवाह्येति हलायुधे पाठः।पणे मूले सति वर्षशतंवाह्या प्राप्येति तत्रार्थः । अत्र व्यासोक्ता कायिका भोगलाभान्तर्गतैव । नारदोक्ता तु तद्भिन्नेति द्रष्टव्यम् ॥

प्रतिमासं स्रवंती या वृद्धिः सा कालिका मता ।
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥

कात्यायनः—

ऋणिकेन तु या वृद्धिरधिका संप्रकीर्त्तिता ।
आपत्कालकृता नित्यं दातव्या कारिता तु सा ॥
अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चन ।
अन्यथेति बलेन स्वीकारितेत्यर्थः ।

बृहस्पतिः—

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा मता ।

शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्त्तते ॥
मूले दत्ते तथैवैषा शिखावृद्धिस्ततः स्मृता ।
गृहात्स्तोमः शदःक्षेत्राद्भोगलाभः प्रकीर्त्तितः ॥

गृहस्य स्तोमः भाटकं शयनादि आधीकृतात्क्षेत्रात् शस्यादिफललाभः शद इत्युच्यते । शद्लृ शातन इति धात्वनुसारात् । अयं चाधिभोग इत्युच्यते । उपलक्षणं चैतत् ।

तथाच कात्यायनः–

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पितः ।
प्रयोगो यत्र चैवं स्यादाधिभोगः स उच्यते ॥

अस्य भोग एव वृद्धिरिति यत्र व्यवस्था स आधिभोगः । कायिका वार्षिकी। कालिका मासिकी। चक्रवृद्धिर्वृद्धेर्वृद्धिः। कारिता आपदि स्वीकृता।शिखावृद्धिः प्रात्यहिकी । भोगलाभो दासादिभोगः ।

अत्र पञ्चमप्रथमषष्ठेषु बृहस्पतिः–

शिखावृद्धिं कायिकां च भोगलाभं तथैव च ।
धनी तावत्समादद्याद्यावन्मूलं न शोधितम् ॥

एषु त्रिषु द्विगुणादिरूपायाः परमवृद्धेरधिकापि वृद्धिश्चिरावस्थाने ग्राह्येत्यर्थः । आधिभोगातिरिक्तं तु त्रिपुरुषोर्ध्वं न देयम् ।

तदाह याज्ञवल्क्यः–

आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥

एवं च ऋणिकप्रपौत्रेणापि सबन्धकमृणं देयमिति भावः ।

उत्तमर्णो दद्यादित्यनुवृत्तौ विष्णुः—

अन्त्यवृद्धौ प्रविष्टायामपि न स्थावरमाधिमृते वचनात् । अन्त्यवृद्धौ प्रविष्टायामयं त्याज्य इत्येवंरूपाद्धनिकवचनादृते तल्लाभे भोगद्वारा वृत्तेपि स तं न दद्यादित्यर्थः ।

याज्ञवल्क्यः—

यदा तु द्विगुणीभूतमृणमाधौ तथा खलु ।

मोच्य आधिस्तदुत्पन्ने प्रवृष्टे द्विगुणे धने ॥

इदमपि धनिकस्य तथाभ्युपगमपरमेव विष्णुवचनेन सहैकमूलकल्पनालाघवात् । षट्सु वृद्धिषु चतुष्टयी वत्सरादूर्ध्वं न ग्राह्या ।

तथा च गोतमः—

नातिसंवत्सरीं वृद्धिं न चादृष्टं पुनर्हरेत् ।

चक्रवृद्धिः कालवृद्धिः कारिता कायिका तथा ॥

बृहस्पतिना यन्मूलदानपर्यन्तं कायिकाया ग्रहणमुक्तम् तन्नारदोक्तायास्तस्या एव मूलधनरूपकायाविरोधित्वात् । गोतमोक्ता त्वियं कायिका शरीरनिर्वाह्या दासादिभोगाद्या बृहस्पतिवचनैकवाक्यताबलात् । तेन गवादीनां संवत्सरपर्य्यन्तमेव दोहनादि । एतदपि

चतुष्टयं पुनरङ्गीकारे देयमेव । " न चादिष्टां पुनर्हरे-त्" इति वचनात् । भोगद्वारा यद्द्विगुणाधिकवृद्धि-ग्रहणं यच्चक्रवृद्धिग्रहणं यच्च पूर्वगृहीतवृद्धया मूल-द्विगुणे धने प्रविष्टे पुनः सवृद्धिमूलग्रहणं तदधर्म्यं न तु न भवत्येव।पूर्वं लिखितबृहस्पतिवचनसिद्धत्वात् । अत एव बृहस्पतिः-

भोगो यो द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते ।
मूलं च सोदयं पश्चाद्वार्द्धुष्यं तच्च गर्हितम् ॥

द्विगुणाधिकवृद्धिग्रहणं वृद्धेर्वृद्धिग्रहणं वृद्धया सह मूलमधिकृत्य मूलत्वेनैतद्ग्रहणमेतत्त्रयं निन्दितमिति गृहस्थरत्नाकरः ॥

## अथाकृतवृद्धिः ।

तत्र कात्यायनः-

कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्द्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥

उद्धारोनिष्कलमृणम् । तत्र याचिते मासत्रयोपरि वृद्धिः ।

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ।
निःक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ॥
याच्यमानो न चेद्दद्याद्वर्द्धते पञ्चकं शतम् ।

क्रयः क्रय्यं विक्रयो मूल्यम् । अत्रापि ऋतुत्रयम-नुवर्त्तते। तत्र न्यासे वृद्धेः शेषे पण्यमूल्ये पण्ये चादत्ते

याचिते ततः षण्मासानन्तरं पणशते पञ्चपणात्मिका वृद्धिः शूद्रेण देया । द्विकं त्रिकमित्याद्येकवाक्यताबलात् ।

कात्यायनः—

प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितम् ।
याच्यमानं न चेद्दत्तं वर्द्धते पञ्चकं शतम् ॥

प्रीतिदत्तं प्रीत्या प्रामितकदत्तम्।अत्र मासत्रयोपरि वृद्धिः । पूर्वलिखितकात्यायनवचनैकवाक्यताबलात् ।

नारदः—

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्द्धाद्विवर्द्धते ॥

दत्तानामिति दानमत्र समर्पणमात्रपरमतो न मासत्रयोपरीत्यनेन पूर्वोक्तेन सह विरोधः ।

तथा—

यो याचितकमादाय न तद्दत्त्वा दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥

देशान्तरगमनं तत्राऽविवक्षितम् ॥

तथा चोक्तम्—

स्वदेशस्थोपि वा यस्तु न दद्याद्याचितोऽसकृत् ।
स तत्राऽकारितां वृद्धिमनिच्छन्नपि चाहरेत् ॥

एतच्चच्छलेन दानासम्पादने बोद्धव्यम् ।

यदा च्छलं विनैव कार्यातिशयादन्यत्र गतस्तदाह विष्णुः—

वृद्धिं दद्युरकृतामपि वत्सरातिक्रमे यथाविहिताम् ।

वत्सतरातिक्रमे वत्सतरादूर्ध्वमित्यर्थः । सर्वमिदं मूल्यनिक्षेपादिकं स्वामिना याचितमदत्तं छद्मना । अर्द्धाब्दोत्तरमच्छद्मना त्वदत्तमब्दोत्तरं वर्द्धत इति समुदायार्थः ।

नारदः–

पण्यमूल्यं भृतिर्न्यासो दण्डो यश्चाभिहारिकम् ।
वृथादानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः ॥

एतेषामव्यवस्थापिता वृद्धिर्न भवतीत्यर्थः ।

कात्यायनेन तु यन्निक्षेपपण्यमूल्ययोरकृतापि वृद्धिरुक्ता तच्छद्मप्रोषितपरम् । भृतिर्वेतनम् । आभिहारिकं छलेन बलेन वा गृहीतम् । वृथादानं धर्ममनुद्दिश्य दातुमुक्तम् । आक्षिकपणं द्यूतादिजितम् ।

संवर्तः–

न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथा स्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयं कृता ।

स्त्रीधनं प्रीतिव्ययितम् ।

तथा भर्तृपित्रादीनुक्त्वा स एवाह–

यद्यप्येकतरोमीषां स्त्रीधनं भक्षयेद्बलात् ।
स वृद्धिं प्रतिदाप्यः स्याद्विनयं च समाप्नुयात् ॥

तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।

मूलमेव स दाप्यः स्याद्यदा स धनभाग्भवेत् ॥

व्यासः—

प्रातिभाव्यं भुक्तबन्धमगृहीतं च दित्सतः ।
न वर्द्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम् ॥

प्रातिभाव्यं द्विगुणमेव देयं स्याल्लग्नकस्य च । पुनर्हि न द्विगुणं भवतीत्यर्थः । बन्धो गोप्याधिः । प्रपन्नो धनिकवशीभूतः । शुल्कं पणीकृतम् । प्रतिश्रुतं दातुमङ्गीकृतम् । एतच्च वृथादानपरम् । तद्वाचकनारदवचनैकमूलकल्पनालाघवादिति प्रतिभाति ।

याज्ञवल्क्यः—

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततः परम् ॥

गोतमः—

न वर्द्धतेऽवरुद्धस्य ऋणम् ।

अवरोधादिना न वर्द्धते ।

चिरकालावस्थाने कियद्दूरं वर्द्धते तत्र गोतमः—

चिरावस्थाने द्वैगुण्यं प्रयोगस्य त्रैगुण्यार्हकालेऽपि द्वैगुण्यमेव । इदं च मण्यादौ ।

अत्र विशेषमाह मनुः—

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।
धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥

सकृद्ग्रहणे मण्यादौ द्विगुणैव वृद्धिर्भवति । धान्या—

दौ पञ्चगुणैव वृद्धिर्भवति। एवं चासकृद्ग्रहणे त्वधिकापि रत्नाकरादिस्वरसोऽप्येवम् । एवं चाहितेत्यपि पाठः । वाह्यं बलीवर्दादि । शदः शस्यम् । लवो लवनीयम् । लोमादि आविकं विहाय।

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठतो द्विगुणा वृद्धिः फालकैटाविकस्य च॥

इत्यावापकात्यायनवचनात्। कैटं कीटभवम्।

गौतमः–

कुसीदं पशूपजलोमक्षेत्रशदवाह्येषु नातिपंचगुणम्।

पशूपजं घृतं विहाय दुग्धादि॥

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम्।
वृद्धिरष्टगुणा प्रोक्ता गुडस्य लवणस्य च॥

इति कात्यायनवचनात्।

बृहस्पतिः–

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके।
धान्ये चतुर्गुणा प्रोक्ता शदवाह्यलवेषु च॥

शदो धान्यातिरिक्तक्षेत्रभवं फलादि।

विष्णुः–

रसस्याष्टगुणा सन्ततिः स्त्रीपशूनाम्।

बृहस्पतिः–

उक्ता पंचगुणा शाके बीजेक्षौ षड्गुणा स्मृता।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा स्मृता॥

गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके ।

रसस्याष्टगुणता लवणादिगोचरैव । विशेषवाक्येन तस्यास्तत्र विधानात् ।

अन्यत्र त्रिगुणता वसिष्ठोक्ता—

द्विगुणं हिरण्यं त्रिगुणं धान्यं धान्येनैव रसा व्याख्याताः । पुष्पफलमूलानि च तुलाधृतमष्टगुणम् ॥

इयमप्यष्टगुणता सुवर्णादिव्यतिरिक्तविषया । तेषां वृद्धिविशेषस्य विशेषवाक्येन विधानात् ।

बृहस्पतिः—

तृणकाष्ठेष्टकासूत्रकिण्वपर्णास्थिचर्मणाम् ।
हेतिपुष्पफलानां च वृद्धिश्च न विधीयते ॥

किण्वं पैठीमूलम् । हेतिरस्त्रम् । एतच्चाकृतवृद्धि-निषेधार्थम् । कार्यवशात्तु वृद्धिरङ्गीकृता भवत्येव। अत एव "फालकैटाविकस्य च" इति "पुष्पफलमूलानि च" इति कात्यायनवासिष्ठाभ्यां द्विगुणत्रिगुणवृद्धिकथनम् । धान्येऽनेकवृद्धयो मूल्यानुसारेण । तेन प्रयोगकाले शस्योत्पत्तेश्च प्राक् यादृशं मूल्यं शस्योत्पत्त्यनन्तरं तस्मादल्पह्रासे त्रिगुणम् । ततोऽधिकह्रासे चतुर्गुणम् । ततोऽधिकह्रासे पञ्चगुणमिति । एतच्च सर्ववृद्धिकथनमू-नमात्र एव । कालान्तरस्यानुपदेशात् ।

तदाह हारीतः—

तृणे द्विगुणं धान्यं त्रिगुणमेव च वर्द्धते ।

मूल्यानुसारेणवृद्धिव्यवस्थां मनुरपि दर्शयति–

समुद्रयानकुशला देशकालार्थदर्शिनः ।
स्थापयन्ति च यां वृद्धिं सा तत्राऽधिगमं प्रति ॥

समुद्रयाने लाभातिशयं ज्ञात्वाऽधिकां कलां कुर्वंति ।

एतद्विषय एव हारीतोपि–

पुराणे पणिकं मास इत्येके
इति ।

नारदेनाप्युक्तम्–

ऋणानां सार्वभौमोयं विधिर्वृद्धिकरः परः ।
देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते ॥
द्विगुणं त्रिगुणं चैव तथान्यस्मिंश्चतुर्गुणम् ।
तथाष्टगुणमन्यस्मिन्देयं देशेऽवतिष्ठते ॥

अन्यस्मिन्देशेऽन्यस्मिन्काले च यावता प्रस्थं लभते उत्पत्तेः प्राक् तावतैव प्रस्थचतुष्टयमुत्पत्तौ लब्धव्यमिति देशकालज्ञाने यत्र द्वैगुण्यादिलाभस्तत्र वर्णक्रमेणैव वास्तु । अस्तु वा मासस्थाने तूनम् । द्वित्रैरपि मासैस्तूने द्विगुणमूनोपचये तु त्रिगुण्यं धान्यं, पुराणे तु मासेन पणैर्वृद्धिरिति संकरजातिपरमिति तु रत्नाकरः। धान्ये त्रिगुणपञ्चगुणत्वे कालभूम्नेति शिष्टाः ।

## अथाधिविधिः ।

तत्र नारदः–

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
कृतकालापनेयश्च यावद्देयोन्यतस्तथा ॥

अन्यतोन्यः ।

तथा—

उपचारस्तथैवास्य लाभहानिर्विपर्यये ।
प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते ।

विपर्ययो नाशः । विकृतिर्भग्नत्वादि । धनिकदोषेणाधेर्नाशे विकृतौ वा लाभहानिरित्यर्थः ।

कात्यायनः—

गोप्याधिभोगे नो वृद्धिः सोपकारे च हापिते ।

मनुः—

न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् ।

सोपकारे भुक्ते कृताधिभोगस्यैव वृद्धिहानौ तत्र तया हापितत्वं केवलमपरो हेतुः । तेन कस्याप्याधेर्धनिकदोषेण व्यवहारक्षमत्वेपि वृद्धिहानिरित्यर्थः ।

तथा—

यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते विचक्षणः ।
तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥
अकाममननुज्ञातमाधिं यः कर्म कारयेत् ।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा लभते न सः ॥

इति कात्यायनवचनादनिच्छतो भोगे सर्ववृद्धिहानिः । आधीकृतदासाद्यपेक्षितभोगे त्वर्द्धस्य । गोप्याधिभोगे तु सर्ववृद्धिहानिः ।

नारदः—

विनष्टे मूलहानिः स्याद्दैवराजकृतादृते ।

बृहस्पतिः–

भुक्ते चासारतां प्राप्ते मूलहानिः प्रजायते ।
बहुमूल्यं यत्र नष्टमृणिकं तत्र तोषयेत् ॥
अवृद्धिकऋणविषयकमेतत् ॥

व्यासः–

ग्रहीतृदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूल्यं दाप्यते धनी ॥

बृहस्पतिः–

दैवराजोपघातेन यद्याधिर्नाशमाप्नुयात् ।
तत्राऽन्यं दाप्यते बन्धं शोधयेद्वा धनं ऋणी ॥

नारदः–

रक्ष्यमाणोऽपि चेदाधिः कालेनेयादसारताम् ।
आधिरन्योथ वा कार्यो देयं वा धनिने धनम् ॥

विष्णुः–

गोचर्ममात्राधिकां भुवमन्यस्याऽऽधीकृतां तस्मादनिर्मोच्याऽन्यस्य यः प्रयच्छति स वध्यः ऊना चेत्षोडश सुवर्णा दण्ड्यः । उत्तराधिर्न सिद्ध्यतीत्यर्थः । पारिजातरत्नाकरस्मृतिसारादयोप्येवम् ॥

एवं च स्वामिकृतस्तद्विक्रयो निराबाध इति द्रष्टव्यम् ।

विष्णुः–

एकोऽश्नीयाद्यदुत्पन्नं नरः संवत्सरं फलम् ।

गोचर्ममात्रा सा क्षोणी स्तोका वा यदि वा बहु ॥

तथा–

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ ।
यस्य भुक्तिर्जयस्तस्य बलात्कारं विना भवेत् ॥
तुल्यकालोपभोगौ चेद्भोगोऽपि समको भवेत् ।
प्रदाने विक्रये चैव विधिरेष प्रकीर्त्तितः ॥

एतच्च प्रायिकम् । उभयत्र दृष्टबलतौल्येऽदृष्टेन निर्णयः ।

कात्यायनः–

न चेद्धनिकदोषेण निष्पतेत म्रियेत वा ।
आधिमन्यं स दाप्यः स्यादृणान्मुच्येत नर्णिकः ॥

गवादौ बन्धकावस्थायां दैवान्नष्टे मूलहानिरित्यत्राविगीतव्यवहार एव मूलम् ।

आधाता यत्र नष्टः स्याद्धनी बन्धं निवेदयेत् ।
राज्ञस्त्वृणः स विज्ञेयो विक्रेय इति धारणा ॥
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्प्पयेत् ॥

बृहस्पतिः–

यत्राहितं गृहं क्षेत्रं भोगे न प्रकर्षान्वितम् ।
तत्रर्णी नाप्नुयाद्द्रव्यं धनी चैव ऋणं तथा ॥

भोगे भोगनिमित्तं न प्रकर्षान्वितम् न पूर्णावधिकम् ।

पूर्णे प्रकर्षे तत्स्वाम्यमुभयोरपि कीर्तितम् ।
अपूर्णे तु प्रकुर्य्यातां परस्परमतेन तौ ॥

प्रकर्षे अवधौ ।

मनुः–

न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ।

कालसंरोधश्चिरकालावस्थानम् । निसर्गोऽन्यत्र तदधिकधनेनाधीकरणम् । दानमिति तु हलायुधः । न विसर्गो न विक्रय उत्तमर्णेन कर्त्तव्य इति शेषः । अन्ये तूत्तमर्णस्य स्वत्वाभावेन प्रसक्त्यभावान्निषेधो न युक्तः अतः संरोधादवधिकालनियमनात्तदभ्यन्तरे चास्वान्तत्र्यादधमर्णेन विसर्गो अन्यस्मै दानं विक्रयश्चाधेर्न कर्त्तव्य इति वाक्यार्थमाहुः । आधीकृत्य विक्रीतस्य विक्रयो बलवानिति तु तादृगवधिरहिताधिपरम् । 'अनिर्मुक्तस्य चैवाधेर्न दानं न च विक्रयः' इति तु निर्मूलम् । एतच्च मनुवाक्यं भोग्याधिविषयमिति कल्पतरौ प्रायो वादः । न्यायसाम्यादकृतव्यवस्थगोप्याधिविषयत्वस्यापि संभवात् ॥

## अथ प्रतिभूः ।

तत्र बृहस्पतिः–

दर्शने प्रत्यये दाने ऋणे द्रव्यार्पणे तथा ।

चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥

ऋणे दान इति सम्बन्धः । अर्पणमत्र याचितकविषयम् । तेन यत्किञ्चित्केनचित्प्रार्थ्य नीतं तत्राऽपरो वदति । यद्ययं नानीयार्पयति तदा मयार्पणीय-

मिति तेन तत्रार्पणमात्रं न दानम् । ऋणे तु दानमेव द्वयोरिति भेदः । सम्प्रदायस्तु ऋणिद्रव्यस्य धनिकायार्पण इति ।

तथा–

आहैको दर्शयाम्येनं साधुरेष परोऽब्रवीत् ।
दाताहमेतद्द्रविणमर्पयाम्यपरो वदेत् ॥
आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ तु विसंवादे तौ विना तत्सुतावपि ॥

विवादरूपन्यायकरणे शपथादौ च लग्नकः कात्यायनोक्तदर्शनादावेव प्रविष्ट इति चतुष्टयम् ।

तद्यथा–

दानोपस्थानविश्वासविवादशपथाय च ।
लग्नकं दापयेद्देयं यथायोगं विपर्यये ॥

असाधुमेव साधुं वदन्प्रत्ययप्रतिभूस्तथा दर्शनमकारयन्दर्शनप्रतिभूः प्रकृतधनं दाप्यो न तु तयोः सुतोपीत्यर्थः ।

तथा च याज्ञवल्क्यः–

दर्शनप्रतिभूर्यत्र मृतः प्रात्याहिकोऽपि वा ।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥

दानार्पणप्रतिभूत्वेन यः स्थितस्तत्पुत्रा दद्युरिति । दर्शने प्रतिभूस्तु दैवराजकृताद‍ृते दर्शनावधौ व्यतीते दाप्यः । तथा राजदैवकेनावधौ व्यतिक्रान्ते तदुप-

घातात्यये अनास्थादिनाऽभियुक्तमरणेन वा तम-दर्शयन्नपि दाप्य एव–

तथा च कात्यायनः–

दर्शनप्रतिभूर्यस्तु देशे काले न दर्शयेत् ।
निबन्धमाहरेत्तत्र दैवराजकृतादृते ॥
काले व्यतीते प्रतिभूर्यदि तन्नैव दर्शयेत् ।
निबन्धं दापयेत्तत्तु प्रेते चैवं विधिः स्मृतः ॥

प्रेते अभियोगिनिदर्शनावधिमतिक्रम्य मृते दर्शन-प्रतिभुवा तस्य तदाप्यदर्शितस्याभियोगो देयः। तथा यदि बन्धकं गृहीत्वा दर्शनप्रतिभूरभूत्तदा पुत्रोपि दाप्यः।

तद्यथा–

गृहीत्वा बन्धकं यत्र दर्शनस्य स्थितो भवेत् ।
विभाव्यवादिना तत्र दाप्यः स्यात्तदृणं सुतः ॥
लग्नकसुतस्य देयं कलारहितम् ।

तथा च व्यासः–

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः ।
समं दाप्यस्तत्सुतस्तु न दाप्य इति निश्चयः ॥

लग्नकबहुत्वे याज्ञवल्क्यः–

बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥

एकच्छायेति धनिको यत्र व्यवहारकाले वदति

ममेच्छया यस्य कस्यापि पार्श्वे गृह्यत इति । न मे मेलनाय यत्न इति तेनैको लग्नको यथा सर्वं ददाति तथा तत्र यः कश्चित् । एकच्छाया तु एकसादृश्यम् । लग्नकः कालं लभते प्रार्थितमृण्यन्वेषणाय—

तथा च बृहस्पतिः—

नष्टस्याऽन्वेषणे कालं दद्यात्प्रतिभुवे धनी ।
देशानुरूपतः पक्षं मासं सार्द्धमथापि वा ॥
नात्यन्तपीडनीयाः स्युर्धनं दाप्याः शनैः शनैः ।
प्रातिभाव्यं तु यो दद्यात्पीडितः प्रतिभावितः ॥
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लघुमर्हति ।

सुगमम् । त्रिपक्षात्परतस्तत्राकारितापि वृद्धिर्भवति । ततः कालेन द्वैगुण्यं न त्वेतावतैव द्वैगुण्यम् । तथान्यदपि व्ययितम् ऋण्यर्थे द्रव्यं प्रतिभुवा ऋणिना देयम् ।

तथा च कात्यायनः—

यस्यार्थे येन यद्दत्तं धनिना पीडितेन च ।
साक्षिभिर्भावितेनैव प्रतिभूस्तं समाप्नुयात् ॥

प्रतिभूग्रहणे च साध्यसिद्धौ समर्थत्वमेवोपयुज्यते ।

तथा च कात्यायनः ।

नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति ॥

समर्थत्वं लोकत एव ज्ञातव्यम् ।

## अथर्णदानविधिः ।

बृहस्पतिः–

याचमानाय दातव्यमल्पकालकृतं ऋणम् ।
पूर्णेऽवधौ शान्तलाभमभावे च पितुः सुतैः ॥

यत्र धनिकेच्छैव दानावधित्वेनोभाभ्यां नियमिता तद्याचमानमात्राय देयम् । यत्र चान्यावधिर्नियमितस्तत्तत्पूर्त्तौ देयम् । यत्र त्ववधिर्न कृतस्ततः परमवृद्धिप्राप्तं सन्देयमित्यर्थः ।

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः ।
विभक्ता ह्यविभक्ता वा यो वा तामुद्वहेद्धुरम् ॥

याज्ञवल्क्यः–

पितरि प्रोषिते प्रेते व्यसनाभिप्लुते तथा ।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥

प्रोषिते तु विशेषमाह नारदः–

नार्वाक्संवत्सराद्विंशात्पितरि प्रोषिते सुतः ॥
ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा ।

ततो विष्णुवाक्ये प्रवसिते द्विदशाः समा इति सम्बन्धः । नान्यत्र विरोधात् । यदाह स एव–

धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः । प्रवसिते वा तत्र पुत्रपौत्रैर्देयं नातः परमनीप्सुभिः ॥

प्रपौत्रो नानिच्छया दद्यादित्यर्थः ।

ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ।

आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥

अविभक्तेन पित्रा पितृव्येण ज्येष्ठभ्रात्रा वा यदृणं कृतं तन्नैयायिकं सत् तस्मिन्प्रोषिते पुत्रादिना विंशतिवर्षानन्तरं देयमिति रत्नाकराद्यर्थः । स्मृतिसारकृतस्तु विभक्तेन पित्रादिना यत्स्वार्थमृणं कृतं तस्मिन्प्रोषिते पुत्रादिना देयम्, तत्रैव कालनियमः । न त्वविभक्तेन कुटुम्बाद्यर्थकृतेऽपि । तत्र च तस्यापि ऋणिकत्वात् । एकच्छायातुल्यमेव, एवं वाक्यमदृष्टार्थं न भवति । अतो यत्रैव बलादेव दानमृणग्रहणनिमित्ततां विनापि तत्रैव वाक्ये न कालविधिः । कुटुम्बार्थकृतं त्वर्वागेव देयम् ।याज्ञवल्क्यस्यैव वचनात् ।

तदाह—

अविभक्तैः कुटुम्बार्थं यदृणं तु कृतं भवेत् ।
दद्युस्तदृक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥

न चात्रापि कालप्रतीक्षा मानाभावात् । किन्तु विभक्तस्यैव सेत्याहुः ।

जीवतो यदृणिदेयं यत्र च न कालापेक्षा तदाह बृहस्पतिः—

सान्निध्येऽपि पितुः पुत्रैर्ऋणं देयं विभावितम् ।
जात्यन्धबाधिरोन्मत्तक्षयश्वित्रादिरोगिणः ॥

पितरि निर्द्धनत्वेन दातुमशक्ते विभक्तेनाऽपि पुत्रेण समर्थेन तदभावे तादृशेन पौत्रेणापि नैयायिकं तदृणं देयमिति तु पारिजातः ।

दाप्यः परर्णं ह्येकोपि जीवन्नपि युतैः कृतम् ।
मृतेषु तु न तत्पुत्रः परर्णं दातुमर्हति ॥
एकच्छायाश्रितानां तु यस्तिष्ठेत्स दद्यात् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥

तथा–

एकच्छायाकृतं सर्वं प्रदद्यात्प्रोषिते सुतः ।
मृते पितरि पित्रंशं परर्णं न कदाचन ॥

अनेवंविधस्यापि देयत्वात् । कालप्रतीक्षावारणार्थमेव वाक्यम् । मृते पितरि पित्रा एकच्छायया कृतमपि ऋणं पुत्रः स्वांशमेव दद्यात् ।

कात्यायनः–

सुस्थेनार्त्तेन वा देयं श्रावितं धर्मकारणात् ।
अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥

बाले तु विशेषमाह नारदः–

अप्राप्तव्यवहारस्तु स्वतन्त्रोपि च नर्णभाक् ।

कात्यायनः–

अप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित् ।
काले तु विधिना देयं वसेयुर्नरकेन्यथा ॥
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ।
बाल आषोडशाद्वर्षात्पौगण्डश्चेति कथ्यते ॥
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ।

कात्यायनः—

यद्दृष्टं दत्तशेषं वा देयं पैतामहं तु तत् ।
सदोषं व्याहृतं पित्रा नैव देयमृणं क्वचित् ॥

दृष्टं प्रमितमित्यर्थः । सदोषं सौराक्षिकादि । पित्रा व्याहृतं विप्रतिपन्नम् । विप्रतिपत्तिश्चाऽनन्यथासिद्धा अत्रोक्ता । अन्यथा अतिप्रसङ्गः स्यात् ।

पितृणदानेऽपवादमाह गोतमः—

प्रातिभाव्यवणिक्छुल्कमद्यद्यूतदण्डा न पुत्रानध्याभवेयुः । प्रातिभाव्यं दर्शनप्रत्ययप्रातिभाव्यम् । तथा वाणिज्यादिना पितुर्दैयतां गतानि धनानि पुत्रान्नाध्याभवेयुः पुत्रान्नाभिभवेयुरित्यर्थः ।

बृहस्पतिः—

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रं न दापयेत् ॥

सौरं सुरानिमित्तं दण्डः शुल्कं तच्छेषं च ।

तथा च व्यासः—

दण्डो वा दण्डशेषो वा शुल्कं तच्छेष एव वा ।
न दातव्यं तु पुत्रेण यच्चन्न व्यावहारिकम् ॥

व्यवहारबहिःकृतमित्यर्थः ।

कामक्रोधकृतमाह कात्यायनः—

लिखित्वा सूक्तकं वापि देयं यत्तु प्रतिश्रुतम् ।

परपूर्वस्त्रियै तत्तु विद्यात्कामकृतं धनम् ॥
यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य वा ।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तत् ॥

तेन नाऽतिप्रसङ्गः वृथादानमपि प्रतिश्रुतमित्यर्थः । अन्यथादत्तत्वादेव न निषेधः स्यात्प्रातिभाव्यं प्रत्ययदर्शनप्रतिभुवोः ।

कदाचित्पित्र्यर्णमपि पुत्रेण न देयमित्याह नारदः-

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥

धनेति । व्यसनग्रस्ते द्रविणार्हेऽपि पुत्रे सति धनग्राहक ऋणं दाप्य इत्यर्थः । स्त्रीधनिनोरिति समस्तादिनिप्रत्ययः । तेन व्यसनादियुतोऽपि पुत्रोऽसति स्त्रीहारिणि धनहारिणि च दद्यात् । स्त्रीहारी धनहारिणि योग्यपुत्रे चासति दद्यात् । अतो धनग्राहिणि सति द्वयोर्न देयम् । अयोग्ये च पुत्रे सति धनहारिणि स्त्रीहारी दद्यात् ॥

तत्रैव बृहस्पतिः-

ऋणभाग्द्रव्यहारी च यदि सोपद्रवः सुतः ।
स्त्रीहारी तु तथैव स्यादभावे धनहारिणः ॥

अत्रैव कात्यायनोपि-

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥

व्यसनाभिप्लुते पुत्रे बाले वा यत्र दृश्यते ।
द्रव्यहृद्दापयेत्तत्तु तस्याभावे धुरन्धिरहृत् ॥
द्वयोरभावे पुत्रस्य देयमित्यत्रैव याज्ञवल्क्योपि–
ऋक्थग्राही धनं दाप्यो योषिद्ग्राही तथैव च ।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥

अतो योग्योपि पुत्रोऽनन्याश्रितधन एव ऋणं दाप्यः तेन पितुरधिकारे योनिषिच्यते स एव तां धुरमुद्वहति तस्यैव देयं नापरपुत्रस्य । तदयं संक्षेपः । धनस्त्रीहारिणोरपि सत्त्वे द्रविणार्हो धुर्यश्च स एव । अनीदृशपुत्रसत्त्वेपि धनहारी । धनहार्यभावे पूर्ववत् । पुत्रसत्त्वेपि स्त्रीहारी । उभयोरभावे योग्योपि पुत्र एवाधमर्णे दद्यात् ।

यदि पुत्राणामेकतम एव पितृस्थानाभिषिक्तस्तदा स एवेति पुत्रवदन्यस्यापि देयं दर्शयति नारदः–

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मात्रा वा यत्कुटुम्बार्थे दद्युस्तत्सर्वमृक्थिनः ॥

मनुः–

कुटुम्बार्थेध्यधीनोपि व्यवहारं य आचरेत् ।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥

बृहस्पतिः–

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।

यद्गृहीतं कुटुम्बार्थं तद्गृही दातुमर्हति ॥

परं दासादिकृतस्यापि देयत्वाद्दक्थिना कुटु-म्बार्थमपि कृतं देयमेवेति "अविभक्तैः कुटुम्बार्थम्" इति वाक्यात्। पुत्रर्णमपि किञ्चित्पितुर्देयम्।

तथाहि–

ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम्।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति ॥

विष्णुः–

न स्त्री पतिपुत्रकृतं न स्त्रीकृतं पतिपुत्रौ।

नारदः–

न भार्य्यया कृतमृणं कथंचिद्यत्पुरा भवेत्।
आपत्कालादृते पुंसः कुटुम्बार्थो हि दुस्तरः ॥
अन्यत्र रजकव्याधगोपशौंडिकयोषिताम्।
तेषां च तत्परावृत्तिः कुटुम्बं च तदाश्रयम् ॥

एवमन्यत्रापि यत्र प्राधान्यं स्त्रीणां तत्र तथैव न तु जात्यादरः कार्यः। तत्र योषिदेव सर्वमनुसंधत्ते। पुरुषोऽज्ञ एव। इदं तु प्रपञ्चमात्रं कुटुम्बार्थं ब्राह्मणादि-स्त्रीकृतस्यापि कुटुम्बिदेयत्वादिति।

अन्यत्र यादृशं स्त्रिया देयं तत्र याज्ञवल्क्यः–

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम्।

कात्यायनः–

भर्त्रा पुत्रेण सार्द्धं वा केवलं चात्मना कृतम्।

नारदः—

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा।
मर्त्तुकामेन वा भर्त्रा उक्ता देयमृणं त्वया।
अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया॥

पत्या स्वीकारितमृणं भार्यया देयम् । तथा गृहीताश्रमधनयाऽपुत्रयाधमर्णमनङ्गीकृतमपि देयमृक्थग्राहित्वादिति संक्षेपः ।

स्त्रीग्राहिणं विशिनष्टि । नारदः—

अन्तिमा स्वैरिणीनां तु पुनर्भ्वां प्रथमा तु या।
ऋणं तयोः पतिकृतं दद्याद्यस्ते समश्नुते॥
अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम्।
ऋणं वोढुः स भजते तदेवाऽस्य धनं स्मृतम्॥

कल्पतरौ—

देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते।
उत्पन्नसाहसाऽन्यस्मै सान्तिमा स्वैरिणी स्मृता॥

रत्नाकरे नारदः—

प्राप्तादेशाद्धनक्रीता क्षुत्पिपासाऽऽतुरा तु या।
तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा॥

अत्र चैतयोरितरापेक्षया श्रैष्ठ्यादेतयोर्ग्रहीता तत्पत्योर्ऋणं दद्यादिति भावः ।

कात्यायनः-

निर्द्धनैरनपत्यैस्तु यत्कृतं शौंडिकादिभिः ।
तत्स्त्रीणामुपभोक्ता तु दद्यात्तदृणमेव तु ॥

आदिशब्देन स्त्र्यधीनवृत्तयो ग्राह्याः ।

कात्यायनः-

दीर्घप्रवासनिर्बन्धुजडोन्मत्तादिलिङ्गिनाम् ।
जीविनामपि दातव्यं तत्स्त्रीद्रव्यसमाश्रितैः ॥

अत्र च पितुर्यादृशमृणं पुत्रेण देयम् । तादृशमेव ऋक्थग्राहिप्रभृतिभिः किन्त्ववृद्धयैव पुत्रवदत्रापि वृद्धिदानानभिधानादित्येव विशेषः ।

यत्र तु ब्राह्मणो धनिकः स च निरन्वयो ध्वस्तस्तत्राह नारदः-

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति यः ।
सकुल्येभ्योऽस्य निनयेत्तदभावेस्य बन्धुषु ॥
यदा च न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः ।
तदा दद्याद्द्विजातिभ्यस्तेष्वसत्स्वप्सु निक्षिपेत् ॥

क्षत्रियादेस्तु राजैव गृह्णीयात् । ब्राह्मणधनवर्ज्जं हि राजगामीति दर्शितम् । तेन ब्रह्मस्वं राज्ञापि न ग्रहीतव्यमित्यर्थः ।

तदृणं प्रार्थनकाले प्रार्थितोपि ऋणी यत्र न ददाति तत्र धनिकेन यत्कर्त्तव्यं तदाह मनुः-

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ।
तैस्तैरुपायैः संगृह्य साधयेदधमर्णिकम् ॥
धर्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पंचमेन बलेन च ॥
पूर्वपूर्वसामर्थ्याभावेऽत्तरोत्तरम् ।
धर्मे बृहस्पतिः—
सुहृत्सम्बन्धिसंदिष्टैः सामोक्त्यानुगमेन च ।
प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः ॥
प्रायः प्रायोपवेशनम् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ।
व्यवहारे कात्यायनः—
धार्योऽवरुद्ध ऋणिकः प्रकाशं जनसंसदि ।
यावन्न दद्याद्देयं च देशाचारस्थितिर्यथा ॥
छद्माचरितबलेषु बृहस्पतिः—
छद्मना याचयित्वार्थमानीय ऋणिकाद्धनी ॥
अन्वाहितादि वाहृत्य दाप्यते यत्र सोपधिः ।
उपधिश्छद्म ।
तथा—
दारपुत्रपशून्बद्ध्वा कृत्वा द्वारोपवेशनम् ।
यत्रर्णी दाप्यतेर्थं स्वं तदाचरितमुच्यते ॥
बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः प्रकीर्त्तितः ॥

प्रथमं प्रार्थनैव सर्वत्र युक्ता ।

कात्यायनः–

राजानं स्वामिनं विप्रं सान्त्वेनैव प्रसाधयेत् ।
ऋक्थिनं दुर्हृदं वापि छलेनैव प्रसाधयेत् ॥

ऋक्थिनं दायादम् ।

तथा–

वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टान्सम्पीड्य दापयेत् ॥

यत्र धारणेपि धनं न लभ्यते तत्राह बृहस्पतिः–

निर्द्धनं ऋणिकं कर्म गृहमानीय कारयेत् ।
शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनैः ॥

याज्ञवल्क्यः–

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

प्रथमत एव बलात्कारे दण्डमाह कात्यायनः–

यदि वादावनादिष्टमशुभं कर्म कारयेत् ॥
प्राप्नुयात्साहसं पूर्वमृणान्मुच्येत चर्णिकः ।

यद्यादावृणिकं गर्हितं कर्म ऋणनिर्यातनाय धनिकः कारयेत्तदा स पूर्वसाहसं दंडच ऋणिकश्च ऋणान्मुच्येतेत्यर्थः ।

नारदः–

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात् ।

शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम् ॥

अथ परमवृद्धिप्राप्तमृणं ऋणिको दातुं न शक्नोति तदा चक्रवृद्ध्या स्वेच्छया धारयेत् ।

तथाच बृहस्पतिः—

पूर्णावधौ शान्तलाभमृणमुद्राहयेद्धनी ।
कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया ॥

पतितवृद्धेर्मूलेन सह मूलीभूताया द्विगुणाधिकं भोगलाभेपि ग्राह्यमित्याह स एव—

द्विगुणस्योपरि यथा चक्रवृद्धिः प्रगृह्यते ।
भोगलाभस्तथा तत्र मूल्यं स्यात्सोदयं ऋणम् ॥

ऋण्यभावे स एव—

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥
रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि ।
ऋणानुरूपं परतो गृह्णीतान्यत्तु वर्ज्जयेत् ॥
स्वधनं तु स्थिरीकृत्य गणनाकुशलैर्नरैः ।
तद्धनं ज्ञातृविदितं प्रगृह्णन्नापराध्नुयात् ॥

उत्तमर्णश्च बलादिनापि स्वधनं गृह्णन्राज्ञा न शास्यः ।

तथा च विष्णुः—

प्रयुक्तमर्थं यथाकथञ्चित्साधयमानो राज्ञा न

वाच्यः स्यात् । यथाकथञ्चिद्यथाविषयं प्रवर्त्तितेन धर्मादिनेत्यर्थः ।

याज्ञवल्क्यः–

प्रतिपन्नं साधयानो न वाच्यो नृपतेर्भवेत् ।
साध्यमाने नृपं गच्छन्दण्ड्यो दाप्यश्च तद्धनम् ॥

प्रतिपन्नोऽङ्गीकृतर्णः । यस्तु विप्रतिपन्नो न्यायवादी सनासेध्यः ।

तथा च बृहस्पतिः–

नासेद्धव्यः क्रियावादी सन्दिग्धेर्थे कथंचन ।
स्वासेधयंस्त्वनासेध्यं दण्ड्यो भवति धर्मतः ॥
प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम् ।
एवं यत्रर्णिको ब्रूते क्रियावादी स उच्यते ॥
रूपसंख्यादिलाभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।
अदेयदेययोर्वापि सन्दिग्धार्थः प्रकीर्त्तितः ॥

मनुः–

यो यावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥

दण्डयस्याऽतिधनत्व इदं द्रष्टव्यम् ।

तथा–

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥

आदौ विमते पश्चादनुमते शते पञ्चकम् । पश्चा-

दपि विमते प्रमिते शते दशकं राज्ञा दण्ड्यः । दण्ड्यस्याऽल्पधनत्व इदम् ।

याज्ञवल्क्यः—

निह्नवे भावितं दद्याद्धनं राज्ञे च तत्समम् ॥
मिथ्याभियोगं द्विगुणमभियोगाद्धनं हरेत् ।
कारणे विधिरेष स्याज्जितस्यैकतरस्य च ॥
प्राङ्न्यायवादे च तथा जितस्यैकतरस्य तु ।

मध्यविधधनस्य मिथ्याकारणप्राङ्न्यायवादे त्विदम्।

यमः—

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा स दापनीयः स्याद्गृहीत्वा द्विगुणं ततः ॥

विष्णुः—

उत्तमश्चेद्राजानमियात् तद्विभावितोऽधमर्णो राज्ञे धनदशमभागं दण्डं दद्यात् । प्राप्तार्थश्चोत्तमर्णो विंशतितमम् ।

कात्यायनः—

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत् ।
तत्तदेवाग्रतो देयं राज्ञः श्रोत्रियतोऽनु च ॥
एकाहे लिखितं यत्र कुर्याद्यावद्ग्रहणं समम् ।
ग्रहणं लक्षणं लाभमन्यथा तु यथाक्रमम् ॥
यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥

अन्यद्रव्याभावे तस्यैव कृते तद्देयमित्यर्थः ॥

याज्ञवल्क्यः–

दत्वर्णं पाटयेल्लेख्यं शुद्ध्यैचान्यच्च कारयेत् ।
साक्षिमच्च भवेद्यद्वा दातव्यं तत्ससाक्षिकम् ॥

## अथ निक्षेपः ॥ २ ॥

तत्र नारदः–

स्वं द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥

मनुः–

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्यें निक्षेपं निक्षिपेद्बुधः ॥

महापक्षो बहुबन्धुः ।

याज्ञवल्क्यः–

वासनस्थमनाख्याय हस्ते न्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

नारदः–

स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये ॥

विपर्यये प्रत्ययं दद्यात् ।

भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे ।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥
न्यासद्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः ।

गृहीतं पालयेद्यत्नात्सकृद्याचितमर्पयेत् ॥

तथाच बृहस्पतिः—

स्थापितं येन विधिना येन यच्च यथाविधि ।
तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे ॥

प्रत्यनन्तरे पुत्रादौ ।

मनुः—

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ।
न स राज्ञा नियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥

नारदः—

ग्रहीतुः सह योर्थेन नष्टो नष्टः स दायिनः ।
दैवराजकृते तद्वन्न चेत्तज्जैह्म्यकारितम् ॥

निक्षेप्तुरेवेत्यर्थः । तेन राजकृतेपि ग्रहीतृकौटिल्यात्कृते देयमेव ग्रहीत्रा । तेन ग्रहीत्रपराधो दाने तदनपराधस्त्वदाने जैह्म्यमजैह्म्यं च हेतुरिति तत्त्वम् ।

मनोरप्येतत्परता—

चौरैर्हृतं जलेनोढमग्निना दग्धमेव च ।
न दद्याद्यदि तस्मात्स न संहरति किंचन ॥

किञ्चित्संहृत्य गृहीत्वा शेषमन्यत्र निक्षिपति उपेक्षते वा सर्वं मम न देयं भवत्विति तत्सर्वं देयमेव ।

याचितकं प्रकृत्य कात्यायनः—

प्राप्ते काले कृते कार्ये न दद्याद्याचितोपि सन् ।
तस्मिन्नष्टे कृते वाथ ग्रहीता मूल्यमाहरेत् ॥

अयमर्थः । यत्कार्य्यमुद्दिश्य यद्याचितं तस्मिन् कार्ये कृते काले वा पूर्णे याचितोपि स्वामिना ग्रहीता न ददाति तदा तदैव राजादिनष्टमपि ग्रहीता मूल्यादिद्वारेण दद्यादेव ॥

नारदोपि–

एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥

न्यासमपह्नुवानः स्वकीयं द्रव्यं तस्मिन्निक्षिप्य प्रार्थ्य प्राप्याचौरत्वेन अप्राप्यचौरत्वेन प्राचीनेपि न्यासे विचारकेण निर्णयः । एवं याचितादावपीति ॥

अत्र प्रकरणे वाक्यमिदं रत्नाकरलिखितम् ।

बृहस्पतिः–

भेदेनोपेक्षया न्यासं ग्रहीता यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यं तत्सोदयं भवेत् ॥

स्वद्रव्यमेव पृथक्कृत्य रक्षति न निक्षिप्तं तत्रापि दद्यादेवेत्यर्थः । तथा यत्र प्रार्थितो न दत्तवान्कालान्तरे च राज्ञा गृह्यते तत्रापि दद्यादेव ।

तथा च नारदः–

याच्यमानस्तु यो दातुर्निक्षिप्तं न प्रयच्छति ।
दण्ड्यः स राज्ञो भवति नष्टो दाप्यस्तु तत्समम्॥
यत्रार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया ।

तत्रापि दण्डयः स भवेत्तं च सोदयमाहरेत् ॥

व्यासः—

भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् ।
किञ्चिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम् ॥
उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः ।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः ॥

उपधा छलम् । सहायो हरणसहकारी । वधस्ताडनबन्धनादिः । अन्यत्राप्येवंजातीयेष्वेवमेव विधिः ।

तथा च बृहस्पतिः—

अन्वाहिते याचितके शिल्पिन्यासे तथैवच ।
एष एवोदितो धर्मस्तथैव शरणागते ॥

शिल्पिन्यासेऽलङ्कारघटनार्थं शिल्पिषु समर्पिते सुवर्णादौ उपधाभिरेषां हरणे उक्तैव शास्तिः ।

यैस्तु संस्क्रियते न्यासो दिवसैः परिनिष्ठितैः ।
तदूर्ध्वं हापयञ्छिल्पी दाप्यो दैवहतं तु तत् ॥

घटनावधिदिनातिक्रमे तु शिल्पिदेयता न तदभ्यन्तर इत्यर्थः ।

मनुः—

यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ तावत्समं दमम् ॥

तत्रैव श्लोके द्विगुणं दममिति मत्स्यपुराणे पाठः ।

स च दमः सधननिकृष्टाचारविषयः । मनुवचनं तु निर्धनसाचारविषयम् ।

कात्यायनः–

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम् ।
अज्ञाननाशितं चापि येन दाप्यः स एव तत् ॥

एवकारेण तदपराधानन्तर्गततत्पुत्रादिव्यवच्छेदः।

तथा च नाध्याभवेयुरित्यधिकारे गौतमः–

निध्यन्वाहितयाचितावक्रीतादयो नष्टाः सर्वाननिन्दितान्पुरुषापराधेन अवक्रीतं भाटकेनावनीतं सर्वान् पुत्रादीन् निरपराधान् ।

उपनिधौ कात्यायनः–

क्रयः प्रोषितनिक्षेपो बन्धोन्वाहितयाचितम् ।
वैश्यवृत्त्यर्पितं चैव सोर्थ उपनिधिः स्मृतः ॥

क्रयो विक्रीतं द्रव्यं विक्रेतुर्हस्ते कथंचित्स्थितम् । स्वामिनि गते देशान्तरमपरेण निक्षेपः । वैश्यवृत्त्यर्पितम् लाभार्थमर्पितमित्यर्थः । अन्वाहितं प्रतिबन्धकमित्यर्थः । एतेषु सर्वेष्वेव रक्षणप्रत्यर्पणपरीक्षणदण्डदानानि न्यासवत् ।

---

## अथास्वामिविक्रयः ॥ ३ ॥

नारदः–

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।

अकृतः स तु विज्ञेयो व्यवहारे यथास्थितिः ॥

कात्यायनः—

अस्वामिविक्रयं दानमाधिं च विनिवर्त्तयेत् ।

मनुः—

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसंमतः ।
न तन्नयेत साक्ष्यं तु स्तेनमस्तेनमानिनम् ॥
अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम् ।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्बिषम् ॥

साक्ष्यं प्रामाण्यम् । अवहार्यो दाप्यः । सान्वयः अकृतधनस्वामिवंश्यः । निरन्वयः तदवंश्यः । अनपसरः तद्धननिर्गमहेतुप्रतिग्रहादिरहितः । षट्शतं पणानां दण्ड्यः ।

तथा—

अनेन विधिना शास्यः कुर्वन्नस्वामिविक्रयम् ।
अज्ञानाऽज्ञानपूर्वं तु चौरवद्दण्डमर्हति ॥

अज्ञातपरस्वविक्रयी षट्शतपणदमेन ज्ञाततद्विक्रयी चोरवद्दण्डेन हस्तच्छेदनादिना शास्यः ।

यदा यस्य हस्ते द्रव्यं तमपरो वदति मदीयं देहीति साधुश्चासौ तदा तेन किं कर्त्तव्यमित्यत्र बृहस्पतिः—

पूर्वस्वामीति तद्द्रव्यं यदागत्य विधारयेत् ।
तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेत् ॥

मूलं यस्मात्तु द्रव्यं तेन लब्धम् ।

कात्यायनः–

प्रकाशं वा क्रयं कुर्यान्मूलं वापि समर्पयेत् ।
मूलानयनकालस्तु देयो योजनसङ्ख्यया ॥
यदा मूलमुपन्यस्य पुनर्वादी वदेत्क्रयम् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥

क्रयशुद्धिरपि तत एव भविष्यतीति तेन मूलाभाव एव क्रयशुद्धिरन्वेषणीया । प्रकाशं क्रयं प्रकाशयेदित्यर्थः ।

मूल आनीते व्यासः–

मूले समाहृते क्रेता नाभियोज्यः कथंचन ।
मूलेन सह वादस्तु नाष्टिकस्य तदा भवेत् ॥

नाष्टिको नष्टधनः ।

बृहस्पतिः–

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेतृराज्ञोर्मूल्यदमौ प्रदद्यात्स्वामिने धनम् ॥

असाधुक्रये क्रेतुरपि दण्डः ।

तदाह नारदः–

अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ॥

अस्वामिविक्रेतृसमदोषभाक् ।

मूलनिगूहनेपि क्रेता तद्वदित्याह नारदः–

न गूहेदागमं क्रेता शुद्धिरस्य तदागमात् ।
विपर्यये तुल्यदोषः सर्वस्तद्दण्डमर्हति ॥

विपर्यये मूलगूहने ।

अनुपस्थापयन्मूलं क्रयं च परिशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

मनुः—

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

यत्र क्रयः प्रकाशकृतः नाष्टिकश्च तत्र स्वत्वं साधयति । मूलं च देशान्तरादिगमने नाशक्याहरणं तत्र क्रेता राज्ञा न दण्ड्यः नाष्टिकाय तद्धनं दाप्यः ।

तथा च कात्यायनः—

नाष्टिकस्तत्र कुर्वीत तद्धनं ज्ञातृभिः स्वकम् ।
अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनी ॥

प्रकाशक्रेत्रा मूलेऽज्ञातवासस्थानत्वादानेतुमशंकिते ।

बृहस्पतिः—

प्रमाणहीनवादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वेन स्वयं कुर्याद्विनिर्णयम् ॥
वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥
स्वामी दत्वार्द्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ।

अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः ॥

तथा—

अविज्ञातक्रये दोषस्तथाचापरिपालनम् ।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥

यत्र नाष्टिको न स्वत्वं साधयति तत्र प्रकाशक्रेतुरेव तद्द्रव्यम् । नाष्टिकस्यैव दण्डः ।

तथा च कात्यायनः—

यदि स्वं नैव कुरुते नाष्टिको ज्ञातृभिर्धनम् ।
प्रसङ्गविनिवृत्त्यर्थं चौरवद्दण्डमर्हति ॥

स्वामितो विक्रयः कश्चिद्विरुद्धो भवति ।

यदाह बृहस्पतिः—

येन क्रीतं तु मूल्येन प्रागध्यक्षनिवेदितम् ।
न तत्र विद्यते दोषःस्तेनः स्याद्दुपधिक्रये ॥
अन्तर्गृहे बहिर्ग्रामान्निश्युपांश्वऽसतो जनात् ।
हीनमूल्यं तु यत्क्रीतं ज्ञेयोऽसावुपधिक्रयः ॥

अत्रास्वामिविक्रयवद्व्यवहारः ।

तथाच विष्णुः—

यद्यप्रकाशं हीनमूल्यमुपांशु क्रीणीयात्तदा क्रेता चौरवच्छास्यः ।

याज्ञवल्क्यः—

हृतं प्रणष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥

राजग्राह्यकरखण्डनाद्दण्डयः ।

---

## अथ सम्भूयसमुत्थानम् ॥४॥

तत्र याज्ञवल्क्यः—

समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदाकृतौ ॥

अव्यवस्थायां मूलधनानुसारेण वृद्धिक्षयौ । व्यवस्थायां तु व्यवस्थानुसारेणैव तावित्यर्थः ।

बृहस्पतिः—

क्षयो हानिर्यदा तत्र दैवराजकृताद्भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥

क्षयो मूलस्य । हानिर्लाभस्य ।

अस्यापवादमाह स एव—

अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु नाशयेत् ।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम् ॥

अनिर्दिष्टोऽननुज्ञातः ।

तथा—

दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत् ।
तस्यांशं दशमं दत्वा गृह्णीयुस्तेंऽशतोऽपरम् ॥

नारदः—

दैवतस्करराजाग्निव्यसने समुपस्थिते ।
स्वशक्त्या रक्षयेद्यस्तु तस्यांशो दशमः स्मृतः ॥

कात्यायनः–

चौरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः ॥

एकस्वामिकेष्वपीयं व्यवस्था इति केचित् । तन्न । सम्भूयसमुत्थानप्रकरणाम्नानात् । एवमेव रत्नाकरादयोपीति । तैश्च परस्परमवञ्चयद्भिः प्रवर्त्तितव्यम् ।

तथा च व्यासः–

समक्षमसमक्षं वाऽवञ्चयन्तः परस्परम् ।
नानापण्यानुसारेण प्रकुर्युः क्रयविक्रयौ ॥

बृहस्पतिः–

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स विशोध्यः स्यात्सर्ववादेष्वयं विधिः ॥

शपथैरिति प्रमाणोपलक्षणम् । साक्षिणोपि क्वेत्रादेः सम्भवात् ।

तस्य क्षतिमप्याह याज्ञवल्क्यः–

जिह्मं त्यजेयुर्निर्लाभमशक्तोन्येन कारयेत् ।
अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणाम् ॥

जिह्मं मूलं दत्वा निःसारयेयुः । अजिह्म एव यो द्रव्यरक्षणे इतरव्यापारे चाशक्तः स इतरं पुरुषं शक्तं नियुंजीतेत्यर्थः ।

रक्षणशक्तस्य त्वेकस्य मरणे नारदः—

एकस्य चेत्स्याद्व्यसनं दायादोऽस्य तदाप्नुयात् ।
अन्यो वा सति दायादे शक्तश्चेत्सर्व एव वा ॥

शक्तस्य मरणे तद्दायादो भाण्डमवेक्ष्य तद्दशममंशं तदभावे सर्वे वणिजो भाण्डं रक्षयित्वा सम्भूय दशममंशं गृह्णीयुरित्यर्थः ।

कृत्स्नभाण्डस्वामिमरणे नारदः—

कश्चिच्च संसरन्देशात्प्रेयादभ्यागतो वणिक् ।
राजास्य भांडं तद्रक्षेद्यावद्दायाददर्शनम् ॥

तथा च बृहस्पतिः—

यदा तत्र वणिक्कश्चित्प्रमीयेत प्रमादतः ।
तस्य भाण्डं दर्शनीयं नियुक्तै राजपूरुषैः ॥

राज्ञे इति शेषः ।

यदा कश्चित्समागच्छेत्तदा ऋक्थहरो नरः ।
स्वाम्यं विभावयेदन्यैः स तदा लब्धुमर्हति ॥

नारदः—

दायादे सति बन्धुभ्यो ज्ञातिभ्योऽथ तदर्पयेत् ।
तदभावे सुगुप्तं तद्रक्षयेद्दश वत्सरान् ॥

एतच्चैकविषयमिति कश्चित् ।

बृहस्पतिः—

राजाऽऽददीत षड्भागं नवमं दशमं तथा ।
शूद्रविट्क्षत्रजातीनां विप्राद्गृह्णीत विंशकम् ॥

अब्दादूर्द्ध्वं तु नागच्छेद्यत्र स्वामी कथञ्चन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणं श्रयेत् ॥

बौधायनः–

अब्राह्मणस्य प्रनष्टस्वामिकमृक्थं संवत्सरं परिपाल्य राजा हरेत् । कालविकल्पस्त्वागमनदेशाद्यपेक्षयाऽचिराच्चिरेण चागमनसम्भावनायाम् ।

नारदः–

अस्वामिकमदायादं दशवर्षस्थितं ततः ।
राजा तदाऽऽत्मसात्कुर्यादेवं धर्म्मो न हीयते ॥
ऋत्विजां व्यसने चैवमन्यस्तत्कर्म्म निस्तरेत् ।
लभेत दक्षिणाभागं स तस्मात्संप्रकल्पितम् ॥

व्यसनेऽसामर्थ्ये ।

सामान्येनैवाह बृहस्पतिः–

एवं क्रियाप्रवृत्तानां यदा कश्चिद्विपद्यते ।
तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिः ॥

याज्ञवल्क्यः–

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।
अनेन विधिराख्यात ऋत्विक्कर्षककर्म्मिणाम् ॥

सम्भूय समुत्थानमार्गेणेत्यर्थः ।

ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत् ।
तस्य कर्म्मानुरूपेण देयोंशः सह कर्तृभिः ॥

व्याध्यादिना स्वकर्म परित्यजत ऋत्विजस्तत्कृतक्रतुभागानुसारेण क्रतुदक्षिणाभागो देय इत्यर्थः।

तथा—

दक्षिणासु च दत्तासु स्वकर्म परिहापयन्।
कृत्स्नमेव लभेतांशमन्येनैव तु कारयेत्॥

माध्याह्निकसवनादौ दक्षिणाकाले दक्षिणासु दत्तासु सतीषु कर्म व्याध्यादिना त्यजन् कृत्स्नमेव क्रतुदक्षिणाभागं लभते। कर्म्मशेषं तु पुत्रादिना कारयेदित्यर्थः।

तथा—

सर्वेषामर्द्धिनो मुख्या द्वितीयास्तु तदर्द्धिनः।
तृतीयिनस्तृतीयास्तु चतुर्थाश्चैकपादिनः॥

ज्योतिष्टोमे शतेन दीक्षयतीति श्रूयते तेन तत्र शतं गावो दक्षिणा विहिता। तत्र कस्य कीदृगंश इत्याकांक्षायां मुख्या होत्रध्वर्युब्रह्मोद्गातारः सर्वेषां गवामर्द्धिनः। द्विन्यूनार्द्धभाजोऽग्रिमभागानुरोधात्तेन तेभ्यश्चतुर्भ्योऽष्टचत्वारिंशद्गावः। द्वितीया मैत्रावरुणप्रस्तोतृब्राह्मणाच्छंसिप्रस्तोतारस्ते प्रथमभागार्द्धिनः। तेन तेभ्यश्चतुर्विंशतिर्गावः। तृतीया अच्छावाकनेष्ट्रग्निप्रतिहर्त्तारस्ते तृतीयिनः प्रथमांशतृतीयभागभाजः तेन तेभ्यः षोडश गावः। चतुर्था ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्यास्ते पादिनः। प्रथमांशचतुर्भागभाजः तेन तेभ्यश्च

तुभ्यौं द्वादश गावो देया इति । एते चत्वारो वर्गा "अध्वर्युगृहपतिम्" इत्यादौ श्रुतौ सुव्यक्ताः ।

तथा–

यस्य कर्माणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः ।
स एव ताश्चाददीत भजेरन्सर्वं एव वा ॥

अङ्गमङ्गं प्रति ऋत्विग्विशेषसम्बन्धेन या दक्षिणा कथिता । यथा आभिषेचनीये हिरण्मयौ प्रकाशौ अध्वर्य्यवे ददातीत्याद्याः ताः किं यन्नाम्ना आम्नातास्तेनैव ग्राह्या, उत स द्वारमात्रं, सर्वैरेव ग्राह्या इति संशयः । अत्र निर्णयार्थमाह स एव–

रथं हरेदथाध्वर्युर्ब्रह्माधाने च वाजिनम् ।
होता चापि हरेदश्वमुद्गाता चाप्यनः क्रये ॥

केषांचिच्छाखिनामाधाने अध्वर्यू रथं ब्रह्मा सवेगमश्वं होता अश्वं सोमक्रये उद्गाता अनः शकटं हरेदित्यर्थः । तथा च यस्यैव यदाम्नातं स एव तद्धरेत् । नान्योपीति तात्पर्य्यम् ।

शंखलिखितौ–

अथ ऋत्विजि वृते पश्चादन्यं वृणुयात् । पूर्वं वृतस्यैव दक्षिणा पश्चाद्वृतः किंचिल्लभेत । प्रवसेच्चेत्तत्कालं निमित्तं चापेक्षमाणस्तत्कालमुदीक्ष्येत नान्तरा यजेत स्यादात्यायिको वा तं क्रतुं समापयेत् ।

प्रोष्य प्रत्यागतः किंचिल्लभेत । अथ चेत्प्रतिषिद्धः प्रवसेत्कामादनुप्राप्ते सवने ऋत्विक् शतं दण्ड्यः। स एव वा दुष्टः स्यात् ऋत्विक्कुलोपाध्यायस्तदुपनायकः । एवं व्याधितपतितोन्मत्तहीनप्रध्वस्तेषु सम्प्रमादात् प्रसाद्य ऋत्विक्षु कामाच्चेदपतितं याज्यं त्यजेदृत्विक् प्राप्नुयाद्विशतं दमं याज्यश्चेत्तदेवाप्नुयात्। यागे ऋत्विजोऽपतितस्य कामं पतितमश्रोत्रियं त्यजेत् ।याज्यंचाभिशस्तमदातारम्।

अस्यार्थः । अथेति । ऋत्विजां मध्ये एकस्मिन्वृतेऽपगतेऽन्यं वृणुयात् । दक्षिणा तु पूर्वस्यैव । उत्तरस्तु कर्मानुरूपं किंचिल्लभेत इत्यर्थः। प्रवसेदिति कश्चिदृत्विक्कार्यवशात्प्रवसेद्यजमानस्तावन्तं कालमपेक्षेत । स्वात्ययशङ्कायां तु यजमान ऋत्विगन्तरेण तं क्रतुं समापयेत्। तस्यैव दक्षिणा प्रोषितागताय तु किंचिद्दद्यादित्यर्थः। अथ चेदिति।यजमानेन निवारितोपि चेत् स्वेच्छयैव ऋत्विक् प्रवसेत्तदा शतं पणानां दण्ड्य इत्यर्थः। स एवेति ऋत्विक् सदोषश्चेत्तदा तमुपनयन्गुरुः शतं दंड्य इत्यर्थः। एवमिति।व्याधितादौ प्रमादाद्भूते पश्चाज्ज्ञाते तान्प्रसाद्य परितोष्य अनुज्ञाप्य ऋत्विगन्तरं वृणुयादित्यर्थः। कामादिति । अत्याज्यत्यागे ऋत्विजः सदृत्विक्त्यागे याज्यस्य च पणशतद्वयं दण्डः। सदोषस्य तु त्यागे न दोष इत्यर्थः।

मनुः–

ऋत्विजं यस्त्यजेद्याज्यो याज्यं ऋत्विक्त्यजेद्यदि ।
शक्तं कर्मण्यदुष्टं च तयोर्दण्डं शतं शतम् ॥

एवं च पूर्वोक्तं द्विशतं सकामत्वे सधनत्वे वा ज्ञेयम् ।

नारदः–

ऋत्विक्च त्रिविधो ज्ञेयः पूर्वैर्जुष्टः स्वयंकृतः ।
यदृच्छया तु यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम् ॥
ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टश्चार्त्विजं याज्यो विनेयौ तावुभावपि ॥
क्रमागते स्वयं धर्मौ वृतेष्वृत्विक्षु च स्वयम् ।
यादृच्छिके तु संयोज्ये त्यागे नास्त्येव किल्बिषम् ॥
संयोज्ये ऋत्विजि ।

बृहस्पतिः–

देशस्थित्या प्रदातव्यं ग्रहीतव्यं तथैव च ।
समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ॥
न याचते च यः कश्चिल्लाभात्स परिहीयते ।
प्रयोगः पूर्वमाख्यातः समासेनोदितोऽधुना ॥
श्रूयतां कर्षकादीनां विवादपदमुच्यते ।
वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च ।
ये समानास्तु तैः सार्द्धं कृषिः कार्या विजानता ॥

वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम् ॥

क्षेत्रहानिः यस्य विसामग्र्या यत्पतितं तत्क्षतिस्तेनैव सोढव्या ।

तथा—

हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्मणाम् ।
संस्कर्त्ता तु कलाभिज्ञः शिल्पी चोक्तो मनीषिभिः॥
हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते ।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः ॥

निर्वेशो भृतिः ।

अत्रैव विशेषमाह कात्यायनः—

शिक्षकाभिज्ञकुशला आचार्यश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान्हरेयुस्ते तथोत्तरम् ॥

ज्ञानोत्कर्षात् ।

बृहस्पतिः—

हर्म्यं देवगृहं वापी चार्मिकोपस्कराणि च ।
सम्भूय कुर्वतां चैषां प्रमुख्योर्द्धांशमर्हति ॥
नर्त्तकानामेष धर्मो धर्मविद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्द्धं गायनास्तु समांशिनः ॥

अर्द्धमधिकं यत्र तदध्यर्द्धमंशं तालज्ञो लभत इत्यर्थः

स्वाम्याज्ञया तु यच्चौरैः परदेशात्समाहृतम् ।

राज्ञे दत्वा तु षड्भागं लभन्ते ते यथांशतः ।
चतुरोंशांस्ततो मुख्यः शूरस्त्र्यंशमवाप्नुयात् ॥
समर्थस्तु हरेद्‌द्व्यंशं शेषास्त्वन्ये समांशिनः ।

मुख्यो बुद्धिशरीरव्यापारवान् । शूरः साहसिकः । समर्थोतिबलः ।

कात्यायनः—

परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञया हृतम् ।
राज्ञो दशांशमुद्धृत्य विभजेरन्यथाविधि ॥

यत्र राज्ञो दर्शनादिव्यापारस्तत्र षड्भागः । अत्यन्तस्वामिव्यवधाने यत्र न तद्व्यापारस्तत्र दशमांशः ।

तथा—

तेषां चेत्प्रसृतानां तु ग्रहणं यः समाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं तस्य कार्या समा क्रिया ॥
सत्त्यागाय धनं सर्वैः समं विभज्य दातव्यम् ।

तथा—

वणिजां कर्षकाणां च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष निश्चयः ॥

---

## अथदत्ताप्रदानिकम् ॥ ५ ॥

नारदः—

दत्वा द्रव्यमसम्यग्यत्पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् ॥

अदेयमथ देयं च दत्तं वादत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥
तत्र ह्यष्टावदेयानि देयमेकविधं स्मृतम् ।
दत्तं सप्तविधं विद्याददत्तं षोडशात्मकम् ॥

असम्यक्त्वं च दानस्य अदेयद्रव्यदानाद्वा अयथा-दानाद्वा सम्प्रदानभ्रान्त्यादिना वा पित्राद्यसम्मत्या वा दातुरेवातिवृद्धाद्यवस्थाभेदाद्वा ।

तत्रादेयानि ।

तत्र बृहस्पतिः—

सामान्यपुत्रदाराऽऽधिसर्वस्वन्यासयाचितम् ।
प्रतिश्रुतं तथाऽन्यस्य न देयं त्वष्टधा स्मृतम् ॥

सामान्यमनेकस्वामिकम्।अत्र सामान्यन्यायात् पुत्र-भार्ययोर्विमतयोर्वचनबलात्सर्वस्वे सान्वयस्य प्रति-श्रुते च सर्वस्यैव वचनबलादेव आधिन्यासयाचितेषु स्वत्वाभावात् पुत्रदारादिसर्वस्वप्रतिश्रुतेषु चतुर्ष्वपि स्वातंत्र्ये सत्यपि वचनबलादेव दानबाध इति।स्मृति-सारमते तु सर्वस्वे दानं सिध्यत्येव । स्वतन्त्रस्वामिकृ-तत्वात् । किन्तु दातुः प्रत्यवायो निषिद्धाचरणा-दिति ।

नारदः—

अन्वाहितं याचितकमाधिः साधारणं च यत् ।

निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥
आपस्त्वपि हि कष्टासु वर्त्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥

पुत्रस्य दाराणां च समासेनोपादानादेकपदार्थतया एकत्वादष्टत्वम् । आपत्कालेपि पुत्रदाराद्यन्वयानां पुत्रदारसर्वस्वानामदेयतेत्यर्थः ।

तत्सम्मतौ तु देयतामाह कात्यायनः–

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत् ॥
आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चयः ॥

तेषां त्रयाणां विमतावेतत्रयं स्वयमेवोपभोक्तव्यम्। तेषामनुमतौ पुनस्तेषां दानमित्यर्थः । सर्वस्वमनुमतावपि न देयं तत्सत्वमात्र एव दाननिषेधादित्यन्ये । पुत्रानुमतावेव वसिष्ठः–

शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकः तस्य दानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । तत्रापि विशेषः एकस्मिन्पुत्रे इत्याह स एव–

नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषां न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः एकः पुत्रः स्वदानेनुमतोपि न देयः।स हि इति हेतुम-

न्निगदस्वरसात् । भर्त्तुरनुज्ञानेपि स्त्रिया न ग्रहणाऽधिकारः । तदङ्गव्याहृतिहोमबाधादिति वर्त्तुलार्थः । नन्वन्यत्रानुज्ञानाद्भर्तुरित्यविशेषश्रवणाद्भर्तुरनुज्ञायां दानग्रहणेपि स्त्र्यधिकारसिद्धौ तदङ्गविद्याप्रयुक्तिरपि तस्याः कल्प्यत इति चेत् । सत्यम् । सहत्वेन तस्या अधिकार इष्टिस्तु पृथक्त्वेन । बाधसापेक्षविध्यापत्तेः ।

देयमाह बृहस्पतिः—

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्द्धर्मोऽन्यथा भवेत् ॥

याज्ञवल्क्यः—

स्वकुटुम्बाविरोधेन देयं दारसुतादृते ।
नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥

कात्यायनः—

सर्वस्वं गृहवर्ज्जन्तु कुटुम्बभरणाधिकम् ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा ॥

यदतिरिच्यते स्वकं स्वकीयं तद्देयम् । अनतिरिक्तदाने पापम् । अतिरिक्ते तु पुण्यम् । अत्र "दातुर्द्धर्मोऽन्यथा भवेत्" इति विहिताकरणाद्धर्मसिद्धिर्न भवतोति ना । किन्तु प्रतिषिद्धाचरणादधर्म्मोपि । दानसिद्धिस्तु स्वे भवत्येव । दृष्टस्य स्वत्वस्य कृतकारणसत्त्वात् । तेन

तन्नाच्छेत्तुं शक्यत इत्यस्व एव दानानिष्पत्तिः। एवं स्थावरेऽपीति स्मृतिसारः। सम्मत्यपेक्षा तु मध्यग एव नामध्यगे।

तथा च बृहस्पतिः–

सप्तागमाद्गृहत्क्षेत्रात्स्वंस्वं क्षेत्रं प्रदीयते।
पित्र्यं चाथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम्॥
स्वेच्छादेयं स्वयं प्राप्तं वन्धावारेण वन्धकम्।
वैवाहिके क्रमायाते सर्वदानं न विद्यते॥

सप्तागमः सप्तविध आगमः। स च
"सप्तवित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च"॥

इति मनूक्तः। अत्र दायोऽन्वयागतम्। लाभो निध्यादेः। जयः संग्रामे। प्रयोगः कुसीदम्। कर्म्मयोगः कृषि वाणिज्यादि। उपलक्षणं चैतत्। कथमपि स्वीकृत मसाधारणं स्वमात्रेच्छया अन्यसाधारणं तु तदनुमतं सद्देयमिति। क्रमायातमप्यविभक्तम्।

सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत्।
स्त्रीज्ञातिस्वाम्यनुमतं दत्तं सिद्धिमवाप्नुयात्।

सौदायिकं कन्याभोग्यतया विवाहे यल्लब्धम्। तत्रैव पत्या दीयमाने पत्न्यनुमत्यपेक्षा न्यायसहत्वात्। न तु स्वभोग्यतयापि प्राप्ते परिधानीयादौ स्मृतेर-

दृष्टार्थत्वापत्तेः। क्रमायातेऽप्यविभक्तस्थावरे जङ्गमे वा भ्रात्रन्तरानुमत्यपेक्षा। एवं शौर्यप्राप्ते रणाजिते शत्रोर्वाहनादौ स्वस्वाम्यनुमत्यपेक्षा। तस्यैव स्वामिगामित्वाभिधानात्। न तु वस्त्रादावपि। तस्य जेतृपुरुषगामित्वाभिधानात्। भक्तिना राज्ञा स्वपुरुषेषु समर्पितेश्वादौ राजान्तरसेनया जिते जेत्रा च दीयमाने भक्तिराजसम्पत्त्यपेक्षा इति न्यायमूला हि व्यवहारस्मृतयः। न तु श्रुतिमूला असम्भवान्तरत्वस्य अत्रोपाधित्वात्।

अत एव—

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः।
युक्तिहीनविचारे तु धर्महानिः प्रजायते॥

इति बृहस्पतिरित्यन्ये। बन्धाचारेणेति बन्धकं यथा स्वसम्बन्धि तथा परस्यापि कार्यम्। तेनायमर्थः। इदं वस्तु मयि बन्धकमस्ति मया त्वयि दीयते त्वयापि बन्धकाङ्कं गृहीत्वा एतत्स्वामिनि देयमित्यर्थः। एवं—

विभक्ता अविभक्ता वा दायादाः स्थावरे समाः।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये॥

इति विभक्तानामपि यत्रांशपरिच्छेदो न जातस्तन्मध्यगमेव तिष्ठति तेन तत्र साधारणत्वमेव। तत्रैकोऽनीशः पृथग्भूतेषु सर्वेष्वेव द्रव्येषु स्वतन्त्रकृतस्य सिद्धिरेव। अन्ये तु दायादपदं पुत्र एव मुख्यमिति पितुरुपस्थितौ विभक्तस्यापि पुत्रस्य स्थावरेऽनीशत्वं

तेन प्रतिग्रहादिसप्तागमलब्धमेव तेन देयमित्याहुः । स्वतन्त्रस्वामिदत्तं च नाच्छेद्यम् ।

तत्रैव हारीतः-

प्रतिश्रुतार्थादानेन दत्तस्याच्छेदनेन च ।
विविधान्नरकान्याति तिर्यग्योनौ च जायते ॥
वाचा यच्च प्रतिज्ञातं कर्मणा नोपपादितम् ।
ऋणं तद्धर्मसंयुक्तमिह लोके परत्र च ॥

कात्यायनः-

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्याद्दणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥

मत्स्यपुराणम्-

प्रतिश्रुताप्रदातारं सुवर्णं दण्डयेन्नृपः ।

अस्यापवादमाह गौतमः-

प्रतिश्रुत्याप्यधर्मयुक्ताय न दद्यात् । अधर्म इहासम्प्रदानत्वप्रयोजकोऽभिमतः ॥

## अथ दत्तम् ।

तत्र बृहस्पतिः-

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्रहसंप्रीत्या दत्तमष्टविधं स्मृतम् ॥

भृतिर्वेतनम् । तुष्ट्या नटादिषु दत्तम् । पण्यमूल्यं विक्रेतरि दत्तम् । स्त्रीशुल्कं विवाहशुल्कं कन्याप्रदे

दत्तम् । उपकारिणे प्रत्युपकारत्वेन दत्तम् । अनुग्रहेण पुत्रादिभ्यो दत्तम् । सम्प्रीत्या मित्रादिषु दत्तम् । प्रीतिदानस्य पूर्वत्रैवान्तर्भावात्सप्तत्वम् ।

## अथादत्तम् ।

तत्र नारदः—

अदत्तं तु भयक्रोधकामशोकरुगन्वितैः ।
अथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढाऽस्वतन्त्रार्त्तिमत्तोन्मत्तापवर्जितैः ।
कर्त्ता ममायं कर्मेति प्रतिलाभेच्छयापि यत् ॥

तत्र रुगन्वितान्ताः पञ्च प्रकृतिस्थितिविरोधिनो द्रष्टव्याः । उत्कोचः कात्यायनेन वक्ष्यते । परीहासः उपहासः।व्यत्यासो भ्रमः।स च देयस्य संप्रदानस्य वा । छलं प्रमादादि । बालोऽत्र कृत्याकृत्याविवेचकः । मूढो जडः । अस्वतन्त्रः पुत्रदासादिः । आर्त्तिरसुस्थता । मत्तो मद्येन। उन्मत्तो वातेन । अपवर्ज्जितो ज्ञातिभिर्बहिष्कृतः। प्रतिलाभेच्छया सोपाधिदत्तम् ।

उपाध्यसिद्धौ कात्यायनः—

कामक्रोधास्वतन्त्रार्त्तक्लीबोन्मत्तप्रमोहितैः।
व्यत्यासपरिहासाभ्यां यद्दत्तं तत्पुनर्हरेत् ॥
यदि कार्यप्रसिद्ध्यर्थमुत्कोचा स्यात्प्रतिश्रुता ।
तस्मिन्नपि प्रसिद्धेर्थे न देया स्यात्कथंचन ।
अथ प्रागेव दत्ता स्यात्प्रतिदाप्यः स तां बलात् ।

दण्डं चैकादशगुणं प्राहुर्गार्गीयगालवाः ॥

अत्रार्त्तेन धर्मार्थं यद्दत्तं तद्दत्तमेव ।

"सुस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥"

इति कात्यायनवचनात् ।

अथ स्वयं निवर्त्यत्वेन उक्तामुत्कोचां परिभाषते कात्यायनः–

स्तेनसाहसिकोद्वृत्तपारदारिकशंसनात् ।
दर्शनाद्वृत्तनष्टस्य तथा सत्यप्रवर्त्तनात् ॥
प्राप्तमेतैस्तु यत्किञ्चित्तदुत्कोचाख्यमुच्यते ।
न तत्र दाता दण्ड्यः स्यान्मध्यस्थस्तत्र दोषभाक् ॥

स्तेनाद्यनुसन्धात्रा स्तेनादिदर्शनार्थं यद्धनं दर्शयित्रे दत्तं यत्र साक्ष्यादीनसत्याभिधाने प्रवर्त्तयित्रे दत्तं तदुत्कोचाख्यं कर्मसिद्धावपि निवर्त्त्यम् । मध्यस्थो य उत्कोचां गृह्णातीत्यर्थः । कामक्रोधदत्तमृणदानस्थल एवोक्तम् ।

बृहस्पतिः–

क्रुद्धहृष्टप्रमत्तार्त्तबालोन्मत्तभयातुरैः ।
मत्तातिवृद्धनिर्धूतैः संमूढैः शोकिरोगिभिः ॥
नर्मदत्तं तथैतैर्यत्तददत्तं प्रकीर्त्तितम् ।

तेन धर्म्माद्यर्थं यद्दत्तं तत्प्रमाणमेवेत्यर्थः । अतिवृद्धो गलितेन्द्रियः ।

तथा—

प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया ।
कार्यें चाधर्मसंयुक्ते स्वामी तत्पुनराप्नुयात् ॥

नर्म्मदत्तं क्रीडादत्तम् । एवमन्यत्रापि यद्रूपे यद्दानं तद्रूपश्चासौ न भवति तदाच्छिद्य गृह्णीयात् ।

तथा च मनुः—

धर्मार्थं येन दत्तं स्यात्कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्यान्न देयं तेन तद्भवेत् ॥
यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राजा दाप्यः सुवर्णं स्यात्तस्य दोषस्य निष्कृतिः ॥

यदि संसाधयेदिति त्वया मे यद्दत्तं तन्मया त्वयि न देयमिति यावत्स्वीकृतं तद्देहि वा यदि वदतीत्यर्थः।

नारदः—

गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीभृता ॥

---

## अथ भृतकविधिः ॥ ६ ॥

तत्र बृहस्पतिः—

अदेयादिकमाख्यातं भृतानामुच्यते विधिः ।
शुश्रूषामभ्युपेत्यैतत्पदमादौ निगद्यते ॥

शुश्रूषामभ्युपेत्याऽशुश्रुषेरेतत्पदं विवादपदमित्यर्थः ।

वेतनस्यानपाकर्म्म तदर्थं स्वामिपालयोः ।

क्रमशः कल्प्यते वादौ भृतभेदत्रयं त्विदम् ॥
कः शुश्रूषकः कतिविधो वा तत्र नारदः–
शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः ।
चतुर्विधः कर्मकरः शेषा दासास्त्रिपञ्चकाः ॥
चतुर्विधाः कर्मकरा दासेन सह पञ्च शुश्रूषका भवन्ति।
कथं चतुर्विधत्वं तत्र नारदः–
शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥
सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः ।
तदेव चतुर्विधत्वं बृहस्पतिरप्याह–
विद्याविज्ञानकामार्थनिमित्तेन चतुर्विधा ।
विद्यात्रयी समाख्याता ऋग्यजुःसामलक्षणा ॥
तदर्थं गुरुशुश्रूषां प्रकुर्य्याच्छास्त्रदेशिताम् ।
नारदः–
आ विद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥
द्वितीयविधायां बृहस्पतिः–
विज्ञानमुच्यते शिल्पं हेमकुप्यादिसंस्कृतिः ।
नृत्यादिकं च तच्छिक्षन्कुर्यात्कर्म गुरोर्गृहे ॥
विज्ञानार्थिन एव नारदेनान्तेवासित्वमुक्तम् ।
स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ॥

आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ।
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ॥
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ।

तथा—

शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥
शिक्षितोपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥

वधोत्र ताडनमात्रम् । बन्धो बन्धनम् । कृतं कालमेतावत्कालं यावन्मया भवदीयमेतत्कर्त्तव्यमिति नियमितं पूर्णेध्ययने तत्पालयेदन्तेवासीत्यर्थः । तत्फलं भृत्यादिफलम् । तथा—

गृहीतशिल्पः समये कृत्वाऽऽचार्यप्रदक्षिणम् ।
शक्तितश्चानुमान्यैनमन्तेवासी निवर्त्तते ॥

तृतीयचतुर्थविधां कामादिनिमित्तेन बृहस्पतिराह—

यो भुङ्क्ते परदासीं तु स ज्ञेयो वडवाभृतः ।
कर्म तत्स्वामिनः कुर्याद्यथान्योन्नभृतो नरः ॥
बहुधार्थभृतः प्रोक्तस्तथा भोगभृतोऽपरः ।
कर्म कुर्यात्प्रतिज्ञातं लभते परिभाषितम् ॥
द्विप्रकारो भोगभृतः कृषिगोजीविनां स्मृतः ।
जातसस्यात्तथा क्षीरात्स लभेत न संशयः ॥

भोगभृतस्याप्यर्थभृतविशेषत्वाच्चतुष्ट्वम् । नारदेनैव भृतकपदेन तृतीयप्रकारत्वमुक्तम् ।

तेषां प्रकारान्तरमप्याह स एव–

भृतकस्त्रिविधो ज्ञेय उत्तमाधममध्यमाः ।
शक्तिभक्त्यानुरूपत्वादेषां कर्माश्रया भृतिः ।
उत्तमश्चायुधीयोत्र मध्यमश्च कृषीवलः ॥
अधमो भारवाहः स्यादित्येष त्रिविधो भृतः ।
अर्थेष्वधिकृतो यः स्यात्कुटुम्बस्य तथोपरि ॥
सोधिकर्मकरो ज्ञेयः स च कौटुम्बिकः स्मृतः ।

बृहस्पतिनाप्यस्याप्यर्थभृत एवान्तर्भावः कृतः । नारदेन तु सामान्यविशेषभावेन भेदेन गणनम् ।

एषां मध्ये किं कस्य कर्मेति तत्र बृहस्पतिः–

शुभकर्मकरा ह्येते चत्वारः समुदाहृताः ।
चत्वारः शिष्योन्तेवासीभृतकः कर्मकरश्च ॥
जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः ।
कर्मापि द्विविधं प्रोक्तमशुभं शुभमेव वा ॥
अशुभं दासकर्मोक्तं शुभं कर्मकरे स्मृतम् ।
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ॥
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ।
गच्छतः स्वामिनः स्वाङ्गैरुपस्थानमथान्ततः ॥
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥

नारदः—

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावासितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाभृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पंचदश स्मृताः ॥

दायादुपागतः पित्रादिक्रमादुपागतः । अनाकालभृतो दुर्भिक्षपोषितः।मोक्षित इति ऋणमोचनेनाभ्युपेतदास्यः कृतः। एतावन्तं कालं तवाहं दास इति कृतसमयः। भक्तदासः सुभिक्षेपि भक्तार्थमङ्गीकृतदास्यः।

नारदः—

राज्ञ एव तु दासः स्यात्प्रव्रज्यावसितो नरः ।
न तस्य हि विमोक्षोस्ति न विशुद्धिः कथंचन ॥

कात्यायनः—

प्रव्रज्यावसिता ये तु त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविण्नृपः ॥

क्षत्रविडिति समाहारद्वन्द्वः ।

दक्षः—

पारिव्रज्यं गृहीत्वा तु यः स्वधर्म्मे न तिष्ठति।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥

अथ कस्य दासस्य कथं मोक्षः अमोक्षो वा तत्र

नारदः–

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥

तत्रेति । गृहजातविक्रीतलब्धपारम्परीणा इत्यर्थः तत्रैव च दासपदं मुख्यम् । अन्यत्र पारतन्त्र्यगुणाद्गौणम् । तेन दासेनोढेत्यत्र पूर्वचतुर्वर्गग्रहणम् ।

तथा–

विक्रीणीते स्वतन्त्रः सन्नात्मानं यो नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ।

स्वतन्त्रोऽस्वामिकः । विना स्वामिप्रसादादित्यत्रापि सम्बध्यते ।

यत्तु–

न स्वामिना विसृष्टोपि शूद्रो दास्यात्प्रमुच्यते ।
निसर्गजं हि तत्तस्य कस्तं तस्माद्व्यपोहति ॥

इतिमार्कण्डेयपुराणे हरिश्चन्द्रवाक्यं तद्दासनिन्दापरम् अन्यथा शूद्रेषु दास्यात्तत्क्रयणादिकं न प्रसज्येतेति ।

तथा–

तवाहमिति चात्मानं योऽस्वतंत्रः प्रयच्छति ।
न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तम् ॥

उत्तरस्य दास एवाऽसौ न भवतीत्यर्थः ।

चौरापहृतविक्रीता ये च दासीकृता बलात् ॥

राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते ।
यश्चैषां स्वामिनं कश्चिन्मोक्षयेत्प्राणसंशयात् ॥
दासत्वात्स विमुच्येत पुत्रभागं लभेत सः ।

एषां मध्ये–

अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ।
भक्षितं चापि यद्दुर्गे तन्न शुद्धयति कर्मणा ॥

दुर्भिक्षे भक्षितं यत्तद्गोयुगसहितं दत्वा मुच्येतेत्यर्थः

आहितोपि धनं दत्वा स्वामी यद्येनमुद्धरेत् ।

आहितो बन्धकीकृतः ।

अथोपगमयेदेनं सोपि क्रीतादनन्तरः ॥

यस्मिन्नाहितो दासस्तमेवोपगमयेत् । ग्राहयेन्न मो-
चयेत् । तदा तस्यैवासौ क्रीतादविशिष्ट इति लक्ष्मी-
धरादयः ।

ऋणं तु सोदयं दत्वा ऋणी दास्याद्विमुच्यते ॥

"ऋणार्थं कर्म कारयेत्" इत्यनेन ऋणी कर्मकरः
कथितः ।

कृतकालव्युपरमात्कृतकोपि विमुच्यते ॥

यः कश्चित्कस्माच्चिद्धेतोर्ऋणस्थितिकालं यावत्
दासीकृतः सकृतकः कर्मणा ऋणक्षयेणावधौ पूर्णे मुच्य
ते । तवाहमित्युपागतो रणे प्राप्तः पणे जितः प्रतिशी
प्रदानेन मुच्यते । तुल्यकर्मणा दासेनापरेणेत्यर्थः ।

भक्तस्योपेक्षणात्सद्यो भक्तदासः प्रमुच्यते ।

निग्रहाद्वडवायाश्च मुच्यते वडवाभृतः ॥

वडवा दासी तस्या निग्रहःत्यागः । तदनन्तरं स्वामिकर्मकर्तृत्वं निवर्त्तते इत्यर्थः । भक्तार्थं यः कर्मका सोपि तत्त्यागान्मुच्यत इत्यर्थः ।

कात्यायनः–

स्वदासीं यस्तु सङ्गच्छेत्प्रसूता च भवेत्ततः ।
अवेक्ष्य बीजं कर्त्तव्या अदासी सान्वया तु सा ॥

प्रकाशरत्नाकरपारिजाते तु–

स्वामिनः पुत्रान्तराभावे सा स्वजनितपुत्रसहिता दासी कार्या । न तु पुत्रान्तरसत्त्वे इत्युक्तम् ।

यः प्रसादेनाऽदासः कार्यः तत्र प्रकारमाह नारदः–

स्वदासमिच्छेद्यः कर्त्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्याऽऽशु भिन्द्यात्कुम्भं सहाम्भस
साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरन् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥
ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोथ प्रतिग्राह्यो भवत्यभिमतः सताम् ॥
अधनास्त्रय एवैते भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥

देवलः–

पितर्युपरते पुत्रा विभजेयुर्द्धनं पितुः ।
अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥

पत्यौ जीवति नारीणां दासानां स्वामिनि स्थिते ।
तद्वन्नियतमस्वाम्यं सर्वार्थेष्वब्रवीन्मनुः ॥
विश्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत् ।
न हि तस्यास्ति किञ्चित्स्वं भर्तृहार्यधनो हि सः ॥
कात्यायनः—
दासस्य तु धनं यत्स्यात्स्वामी तस्य प्रभुः स्मृतः ।
प्रसादविक्रयाद्यत्तु न स्वामी धनमर्हति ॥
स्वामिप्रसादादात्मविक्रयाच्च यल्लब्धं दासेन तद्दा-
धनं स्वामी नार्हति ।
दासेनोढा त्वदासी या सापि दासत्वमाप्नुयात् ।
यस्माद्भर्त्ता प्रभुस्तस्याः स्वाम्यधीनप्रभुर्यतः ॥
अत्र दासपदोपस्थापितप्रतियोगिकमेव दासीत्वं
ासत्वं च यदि न्यायादतोऽस्वामिका अन्यस्वामिका
ा परिणीता सती वरस्वामिनः स्वीभवति । अर्थाच्च
ासोढत्वं पूर्वस्वामिदास्यमोक्षहेतुरुक्तः । अत एव
त्प्रकरणे वाक्यमिदं स्वाम्यनुमत्या च दासकृतं प्रमा-
मतस्तद्भिमतिविषये चेटिकापरिणयवन्न पूर्वस्वामि-
वत्वहानिरिति ।

## अथ दास्याधिकारः ।

तत्र नारदः—
वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ।

स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥

उत्तमस्य नीचदासत्वं न भवति दारवत् । स्वाश्रमधर्मत्यागिनः परं तादृशी दासतेत्यर्थः ।

कात्यायनः–

त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ।
समवर्णे तु विप्रस्तु दासत्वं नैव कारयेत् ॥
शीलाध्ययनसम्पन्नस्तदूनं कर्म कारयेत् ।
तत्रापि नाशुभं किंचित्प्रकुर्वीत द्विजोत्तम ॥
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते ।
क्षत्रविट्शूद्रधर्मस्तु समवर्णे कदाचन ॥
कारयेद्दासकर्माणि ब्राह्मणं न बृहस्पतिः ॥

सगुणो निर्गुणमधिकगुणो न्यूनगुणं कर्म कारयेत् । तत्रापि अशुभं विण्मूत्रशोधनादिकं न कारयेदित्यर्थः ।

मनुः–

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्षितौ ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयेत् ।

स्वानि स्वजात्युक्तानि–

दास्यं च कारयन्मोहाद्ब्राह्मणः संस्कृतान्द्विजान् ।
अनिच्छतः प्रभावित्वाद्राज्ञा दाप्यः शतानि षट् ॥

दास्यं शूद्रोचितं द्विजाऽनुचितमिति यावत् ।

शूद्रं तु कारयेद्दास्यं क्रीतमक्रीत एव वा।
दास्यायैव हि सृष्टोऽसौ स्वयमेव स्वयंभुवा॥
न स्वामिना विसृष्टो हि शूद्रो दास्याद्विमुच्यते।
निसर्गत्वं हि तत्तस्य कथं तस्माद्व्यपोहति॥

दास्याद्दासकर्मणः।

विष्णुः—

यस्तूत्तमवर्णं दास्ये नियोजयति तस्योत्तमसाहसो दण्डः।

उत्तमवर्णं ब्राह्मणम्। उत्तमसाहसः पणसहस्रम्।

कात्यायनः—

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च।
राज्ञा तदकृतं कार्यं दण्ड्याःस्युः सर्व एव ते॥
कामात्संसृजतीं यस्तु दासीं कुर्यात्कुलस्त्रियम्।
सङ्क्रामयति वान्यत्र दण्ड्यस्तच्चाकृतं भवेत्॥

स्वेच्छयोपगतां कुलस्त्रियं यो दासीं कुर्यादन्यत्र वा समर्पयेत्स दण्ड्य इत्यर्थः।

बालधात्रीमदासीं च दासीमिव भुनक्ति यः।
परिचारकपत्नीं च प्राप्नुयात्पूर्वसाहसम्॥
विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति।
अनापदिस्थः शक्तः सम्प्राप्नुयाद्द्विशतं दमम्॥

बालधात्री दास्यपि सती बालकस्य स्तन्यदात्री।

अदासी शरणागता । विक्रोशमाना स्वविक्रयमनिच्छ-
न्ती । पूर्वसाहसं सार्द्धपणशतद्वयम् ।

## अथवेतनानपाकर्म्म ।

तत्र नारदः—

भृताय वेतनं दद्यात्कर्म्मस्वामी यथाकृतम् ।
आदौ मध्येऽवसाने वा कर्मणां यद्विनिश्चितम् ॥
भृतावनिश्चितायां तु दशमं भागमाप्नुयुः ॥
लाभगोवीर्यसस्यानां वणिग्गोपकृषीवलाः ।
लाभो वाणिज्येन धनवृद्धिः । गोवीर्यं दुग्धम् ।

याज्ञवल्क्यः—

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।

बृहस्पतिः—

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः ।
भक्ताच्छादनभृत्सीरी भागं गृह्णीत पञ्चकम् ॥
जातशस्यत्रिभागं तु प्रगृह्णीतोपधाभृतः ।

उपधा उपधिः । यदत्रोत्पत्स्यते तत्र त्रिभाग इति न वस्त्रान्नादि किंचिद्दीयते यस्य स उपधाभृतः तस्य त्रिभागः । भक्ताच्छादनदाने पञ्चमः । नारदोक्तो दशमोंशः सीरवाहकेतरविषयः ।

आपस्तम्बः—

उद्वसतः कीनाशस्य कर्मनाशे दण्डताडनं तथा पशुपस्यावरोधनं चास्य पशूनाम् ।

उद्वसतः पलायमानस्य कीनाशस्य हलवाहकस्य दण्डताडनम्। तथा गोपालस्य तस्य पशूनां चावरो धनमधिकम्।

वृद्धमनुः—

समुद्रयानकुशला देशकालार्थवेदिनः।
नियच्छेयुर्भृतिं यां तु सा स्यात्प्रागकृता यदि॥

समुद्रयानकुशला वणिग्वेतनाभिज्ञा इत्यर्थः।

बृहस्पतिः—

गृहीतवेतनः कर्म न करोति यदा भृतः।
समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम्॥

समर्थः सन्कर्म्म न करोतीति सम्बन्धः।

गृहीतवेतनः कर्म त्यजन्द्विगुणमावहेत्।
अगृहीते समं दाप्यो भृतै रक्ष्य उपस्करः॥

कर्मारभ्यत्यजन्वैतनिको गृहीतवेतनो द्विगुणमगृहीतवेतनस्तु समं दाप्यः। भृतैर्हलवाहकादिभिः। उपस्करो लाङ्गलकादीनां योक्त्रादि।

नारदः—

कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्वा भृतिं बलात्।

वृद्धमनुः—

स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्विशतं दमम्।
इदमारभ्याकुर्वतः।

अनारम्भे तु मनुः—

भृतोनार्त्तो यो न कुर्याद्दर्पात्कर्म यथोदितम्।

स दण्डयः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥
यथोक्तमार्त्तः सुस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥
आर्त्तोऽपि कुर्यात्सुस्थः सन्यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य स लभेतैव वेतनम् ॥

अल्पोनस्य अल्पावशिष्टस्य आर्त्तो हि कर्म हित्वा सुस्थः सन् चिरेणापि कृत्वा वेतनं लभते ।

नारदः–

काले पूर्णे त्यजन्कर्म भृतेर्नाशमवाप्नुयात् ।
स्वामिदोषादपाक्रामन्यावत्कृतमवाप्नुयात् ॥

विष्णुः–

भृतकश्चापूर्णे काले कर्म त्यजन्सकलमेव मूल्यं दद्यात् । राज्ञे च पणशतं दद्यात् । स्वामी चेद्भृतकमपूर्णे काले जह्यात्, तस्य सकलमेव मूल्यं दद्यात् । पणशतं राजन्यत्र भृतकदोषात् । मूल्यं वेतनम् ।

वृद्धमनुः–

प्रमादान्नाशितं दाप्यः समं द्विद्रोहनाशितम् ।
न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा ॥

दाप्यो भृतकः । प्रकरणात् । तद्दोषमन्तरेण तु नष्टं स न दाप्य इत्यर्थः ।

बृहस्पतिः–

प्रभुणा विनियुक्तः सन्भृतको विदधाति यत् ।

तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥

तदर्थं स्वाम्यर्थम् । अशुभं चौर्यादि ।

मत्स्यपुराणे—

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति ।
दण्ड्यः स मूल्यं सकलं धर्मज्ञेन महीभृता ॥

वृद्धमनुः—

पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि ।
अगतस्यापि देयं स्याद्भृतेरर्द्धं लभेत सः ॥

अगतस्यापि पूर्वश्रावितमध्वानमगतस्यापि भृतकस्य कृते वेतनं देयं स्यात् । किन्त्वगताध्ववेतनार्द्धमित्यर्थः ।

कात्यायनः—

यदा च पथि तद्भाण्डमासिद्ध्येत ह्रियेत वा ।
यावानध्वा गतस्तेन प्राप्नुयात्तावतो भृतिम् ॥

आसिद्ध्येत केनापि प्रतिबाध्येत ।

बृहस्पतिः—

कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृतेः ।
राज्ञा दापयितव्यः स्याद्विनयं चानुरूपतः ॥

कात्यायनः—

त्यजेत्पथि सहायं यः श्रान्तं रोगार्त्तमेव वा ।
आप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन् ।
सहायं वैतनिकादि ॥

## अथ पण्यस्त्रीविधिः ।

तत्र नारदः–

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।
अनिच्छञ्छुल्कदातापि शुल्कहानिमवाप्नुयात् ॥

स्मृतिः–

व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा ।
आमंत्रिता च नागच्छेदवाच्या वडवा स्मृता ॥

अवाच्या निर्दोषा । वडवात्र वेश्या ।

मत्स्यपुराणे–

अयोनौ यः समाक्रामेद्बहुभिर्वापि वासयेत् ।
शुल्कं सोष्टगुणं दाप्यो विनयं तावदेव तु ॥

अयोनौ मुखादौ मेहनं प्रवेशयेत् । स्वमात्रार्थमानीय बहुभिः सह योजयेद्वा स वेश्याशुल्कमष्टगुणं राजदण्डं च तथा दद्यात् ।

तथा–

अन्यमुद्दिश्य यो वेश्यां नयेदन्यस्य कारणात् ।
तस्य दण्डो भवेद्राज्ञः सुवर्णस्य तु माषकम् ॥
नीत्वा भोगं न यो दद्याद्दाप्यो द्विगुणवेतनम् ।
राज्ञश्च द्विगुणं दण्डं तथा धर्मान्न हीयते ॥
बहूनां व्रजतामेकां सर्वे ते द्विगुणं धनम् ।
तस्या दद्युः पृथग्राज्ञे दण्डं च द्विगुणं परम् ॥

नारदः—

वेश्याप्रधाना ये तत्र कामुकास्तद्गृहोषिताः ।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः ॥

## अथ गृहादिभाटकम् ।

परभूमौ गृहं कृत्वा स्तोमं कृत्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥
स्तोमं विना वसित्वा तु परभूमावनिच्छतः ।
निर्गच्छेत्तृणकाष्ठानि न गृह्णीयात्कथंचन ॥

कात्यायनः—

गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिनो नार्पयेद्यावत्तावद्दाप्यः स भाटकम् ॥
वारि परकृताप्रतिष्ठितमत्र विवक्षितम् ।
हस्त्यश्वगोखरोष्ट्रादीन्गृहीत्वा भाटकेन यः ।
स्वामिनो नार्पयेद्यावत्तावद्दाप्यः स भाटकम् ॥

वृद्धमनुः—

यो भाटयित्वा शकटं नीत्वा नान्यत्र गच्छति ।
भाटं न दद्याद्दाप्योऽसावनूढस्याऽपि भाटकम् ॥

शकटं वृषनौकादेरप्युपलक्षणम् । अनूढस्यावाहितस्यापि शकटादेः ।

नारदः—

स्तोमवाहीनि भाण्डानि पूर्णकालेऽप्युपानयेत् ।
गृहीतुराभवेद्दयं नष्टं वान्यत्र संप्लवात् ॥

अन्यथा प्रत्यर्पितं सत् राजदैवकमन्तरेण काल-दोषादिनापि नष्टं ग्रहीतुः समाधेयं भवेदित्यर्थः ।

## अथ स्वामिपालविवादः॥ ७॥

तत्र मनुः-

गोपः क्षीरभृतिर्यस्तु स दुह्याद्दशतोवराम् ।

गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ।

क्षीरभृतिः क्षीरमात्रवेतनः । दशसु धेनुष्वेकां श्रेष्ठाम्।अभृते ग्रासाच्छादनादिना।इदं धेनुमात्ररक्षणे।

धेन्वधेनुरक्षणे तु नारदः-

गवां शताद्वत्सतरी धेनुः स्याद्विशताद्भृतिः ।

प्रतिसंवत्सरे गोपे संदोहश्चाष्टमेऽहनि ॥

वत्सतरी त्रिहायणी गौः । यावत्योत्र धेनवस्ता वतीनामष्टमाहेसम्यग्दोहश्च भृतिः ।

बृहस्पतिः-

तथा धेनुभृतः क्षीरं लभते ह्यष्टमेखिलम् ।

धेनुभृतो गोपः ।

नारदः-

उपानयेद्गां गोपाय प्रत्यहं रजनीक्षये ।

चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्युपानयेत् ॥

चीर्णाः भक्षिततृणाः । पीताः पीतजलाः ।

याज्ञवल्क्यः-

अथार्पितान्पशून्गोपः सायं प्रत्यर्पयेत्तथा ।

प्रमादहृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥

नारदः—

दिवा वक्तव्यता गोपे रात्रौ स्वामिनि तद्गृहे ।
योगक्षेमान्यथात्वे तु पालो वक्तव्यतामियात् ॥

मनुनारदौ—

विक्रम्य तु हृतं चौरैर्न पालो दातुमर्हति ।
यदि देशे च काले च स्वामिनस्तच्च शंसति ॥

देशेऽन्वेषणयोग्ये । एवं कालेपि ।

व्यासः—

पालग्रहे ग्रामघाते तथा राष्ट्रस्य विप्लवे ।
यत्प्रणष्टं हृतं वा स्यान्न पालस्तत्र किल्बिषी ॥

बृहस्पतिः—

कृमिचौरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत् ।
आयच्छेच्छक्तितः क्रोशेत्स्वामिने वा निवेदयेत् ॥

श्वभ्रं गर्त्तः दरी कन्दरा ।

अव्यायच्छन्नविक्रोशन्स्वामिने चानिवेदयन् ।
वोढुमर्हति गोपस्तां विनयं चैव राजनि ॥

वोढुं दातुम् ।

मनुः—

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम् ।
हीनं पुरुषकारेण प्रदद्याद्गोप एव च ॥

नष्टं चौरादिनापहृतं गोपकर्तृकप्रतीकारेण हीनं

सन्नष्टादिकं भूतम् । तेन पालवैगुण्यं तद्धाने कारणमित्यर्थः ।

याज्ञवल्क्यः–

पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्द्धत्रयोदशपणाः स्वामिनो द्रव्यमेव च ॥

विष्णुः–

अननुज्ञानाद्दहन्पञ्चविंशतिकार्षापणम् ।

ब्रह्मपुराणे–

गृहीतमूल्यो गोपालो गास्त्यक्त्वा निर्जने वने ।
ग्रामचारी नृपैर्वध्यः शलाकी वनगोचरः ॥

शलाकी नापितः ।

यदि रोगादिदोषेण म्रियते गौर्गृहे क्वचित् ।
तदा स गोपतिर्दण्ड्योऽदत्वा गोपालवेतनम् ॥

नारदः–

अनेन सर्वपालानां विवादः समुदाहृतः ।
मृतेषु तु विशुद्धिः स्याद्वालश्रृङ्गादिदर्शनात् ॥

मृतत्वं निश्चितं कुर्यात्केनापि प्रकारेणेत्यर्थः ॥

---

## अथ संविद्व्यतिक्रमः ॥ ८ ॥

तत्र बृहस्पतिः–

ग्रामश्रेणिगणानां च सङ्केतसमयक्रिया ।
बाधाकाले तु सा कार्या धर्मकार्ये तथैव च ॥

वाटचौरभये बाधा सर्वसाधारणी स्मृता ।
तत्रोपगमनं कार्यं सर्वैर्नैकेन केनचित् ॥
कोषेण लेख्यक्रियया मध्यस्थैर्वा परस्परम् ॥
विश्वासं प्रथमं कृत्वा कुर्युः कार्याण्यनन्तरम् ।
शुचयो वेदधर्मज्ञा दान्ता दक्षाः कुलोद्भवाः ॥
सर्वकार्यप्रवीणास्तु कर्त्तव्यास्तु महत्तमाः ।
द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ॥
कर्त्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ।
ग्रामो ग्रामवासिसमूहः । गणो ब्राह्मणादिसमूहः ।

याज्ञवल्क्यः—

कर्त्तव्यं वचनं तेषां समूहहितवादिनाम् ।
यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥
युक्तियुक्तं च यो हन्याद्वक्तुर्योऽनवकाशदः ।
अयुक्तं तत्र यो ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥

नारदः—

पाषण्डनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा ॥

पाषण्डास्त्रयीबाह्याः । नैगमाः पौराः।पूगो वणिगादिसमूहः । व्रात आयुधीयसमूहः । आदिपदेन सर्वसंग्रहादुपलक्षणतैव तेषाम् ।

याज्ञवल्क्यः—

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।

सोऽपि यत्नेन संरक्षेद्धर्मो राजकृतश्च यः ॥

स्वगणयोगक्षेमार्थं मासि मासि राजोपस्थानं कार्य-मित्येवंरूपः सामयिको धर्मः । मम कृते मासि मासि शान्तिः करणीया भवद्भिरित्यादिराजकृतो धर्मः । तद्व्यतिक्रमो न कार्य इत्यर्थः ।

कात्यायनः–

राज्ञा प्रवर्त्तितान्धर्मान्यो नरो नानुपालयेत् ।
गर्ह्यः स पापो दण्ड्यश्च लोपयन्राजशासनम् ॥

याज्ञवल्क्यः–

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेत्तु यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

कात्यायनः–

साहसी भेदकारी च गणद्रव्यविनाशकः ।
उच्छेद्याः सर्व एवैते विज्ञाप्यैवं नृपे भृगुः ॥

समयक्रियेत्युपक्रम्य बृहस्पतिः–

पालनीया समस्तैस्तु यः समर्थो विसंवदेत् ।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात् ॥
तत्र भेदमुपेक्षां वा यः कश्चित्कुरुते नरः ।
चतुःसुवर्णाः षण्निष्का दण्डस्तस्य विधीयते ॥

मनुस्तत्रैव षण्निष्कानन्तरमभिधाय शतमानं तु

राजतमित्यधिकमाह । यद्यपि निष्कश्चतुःसुवर्ण एव प्रसिद्धस्तथापि ।

सार्द्धं शतं सुवर्णानां निष्कमाहुर्मनीषिणः ।

तथा पञ्चसौवर्णिको निष्क इत्याद्युक्तनिष्कान्तरवारणायात्र चतुःसुवर्ण इति निष्कविशेषणम्। शतमानरक्तिकानां विंशत्यधिकशतत्रयम् ।

तथा—

अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा ।
श्रेणीपूगनृपद्विष्टा क्षिप्रं निर्वास्यते ततः ॥

अरुन्तुदः मर्मस्पृक् । सूचकः पिशुनः ।

कात्यायनः—

एकपात्रेऽथ पङ्क्त्यां वा सम्भोक्ता येन यो भवेत् ।
अकुर्वंस्तत्तदा दण्ड्यस्तस्य दोषमदर्शयन् ॥

बृहस्पतिः—

सम्भूयैकमतं कृत्वा राजभागं हरन्ति ये ।
ते तदष्टगुणं दाप्या वणिजः प्रपलायिनः ॥

राजभागं राजदेयम् ।

याज्ञवल्क्यः—

समूहकार्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् ॥

बृहस्पतिः—

ततो लभेत यत्किञ्चित्सर्वैस्तेनैव तत्समम् ।

कात्यायनः-

गणमुद्दिश्य यत्किञ्चित्कृतमृणं भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत् ॥

गणमुद्दिश्य गणमपदिश्य गणहितव्याजेन यदृणं कृतं तत्कर्तृभिरेव देयमित्यर्थः ।

गणानां श्रेणिवर्गाणां गताः स्युर्ये तु मध्यताम् ।
प्राक्तनस्य धनर्णस्य समांशाः सर्व एव ते ॥

अर्वागपि ये सर्वसम्मत्या वणिगादिगणादिषु प्रविष्टास्तेपि सर्वस्य पूर्वधनर्णस्य वाणिज्यादिमूलकस्य भागिन इत्यर्थः ।

तथैव भोज्यवैभाज्यदासधर्मक्रियासु च ।
समूहस्थोंऽशभागी स्यात्प्रगतस्त्वंशभाग्न तु ॥

भोज्यं मोदकादि । प्रगतः स्वकार्यमात्रार्थं गतस्तत्रांशभाक् न भवतीत्यर्थः ।

---

## अथ विक्रीयासम्प्रदानम् ॥ ९ ॥

तत्र नारदः-

विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥
अर्घाच्चेदवहीयेत सोदयं पण्यमाहरेत् ।
स्थायिनामेष नियमो दिग्लाभो दिग्विचारिणाम् ॥

स्थावरस्य विक्रीतभूम्यादेः क्षयः सस्याद्युत्पत्ति-

हानिः । जङ्गमस्य वृषादेर्वाहनादिक्रिया । गवादेः फलं क्षीरादि । क्रीतं रत्नादि चेत्तेनादत्तमर्घादवहीयते । न्यूनमूल्यं क्रमेण स्यात्तदा मूल्यहानिसहितं स्थापिने क्रेत्रे देयम् । दिग्विचारिणां देशान्तरगमनशालिनाम् । गमने यो लाभः स्यात्तमेव दद्यात् ।

विष्णुः—

गृहीतमूल्यो यः पण्यं क्रेतुर्नैव दद्यात् । तस्याऽसौ सोदयं दाप्यो राज्ञा च पणशतं दण्ड्यः । विक्रेत्रा सर्वमूल्यग्रहणे कृते सति एतत्सर्वं द्रष्टव्यम् । मूल्यग्रहणार्थं धारणे तु न दोषः ।

तथा च नारदः—

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्त्तितः ।
अदत्तेऽन्यत्र समयान्न च क्रेतुरतिक्रमः ॥

नारदः—

उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयाऽसंप्रयच्छतः ॥

याज्ञवल्क्यः—

राजदैवोपघातेन पण्यदोष उपागते ।
हानिर्विक्रेतुरेवासौ याचितस्याऽप्रयच्छतः ॥
दीयमानं न गृह्णाति क्रीतपण्यं तु यः क्रयी ।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः ॥

मनुः–

क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् ।
सोन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाददीत वा ॥
परेण तु दशाहस्य नादद्यान्नैव दापयेत् ।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥
यस्मिन्यस्मिन्कृते कार्ये यस्येहानुशयो भवेत् ।
तमनेन विधानेन धर्म्ये पथि निवेशयेत् ॥

कात्यायनः–

क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम् ।
समूल्याद्दशभागं तु दत्वा स्वं द्रव्यमाप्नुयात् ॥

प्राप्तं स्ववशतामानीतम् ।

स्ववशतामनानीते तु विशेषमाह स एव–

अप्राप्तार्थं क्रियाकारे कृतेनैव प्रदापयेत् ।
एवं धर्मो दशाहात्तु परतोऽनुशयो न तु ॥

क्रियाकारः साक्षिलेख्यादि तस्मिन्कृतेऽपि पण्य स्ववशतामनानीते अवध्यभ्यन्तरे परावर्त्य दत्ते तु न क्रेतुर्दशमभागहानिः । प्रकाशदोषस्य तु नावध्युत्तर परावर्त्तनमित्यर्थः । यत्तु सदोषमेवात्यन्तं तं च दोषं संगोप्य च्छलेन विक्रीतं तत्पश्चादपि व्याघुष्य देयम् ।

तथाच बृहस्पतिः–

ज्ञात्वा सदोषं यः पण्यं विक्रीणात्यविचक्षणः ।

तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा ॥
मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन च ।
अस्वतंत्रेण मूढेन त्याज्यं तस्य पुनर्हरेत् ॥

तस्य क्रेतुस्त्याज्यं त्यागार्हं पुनर्हरेत् । विक्रेता अस्वतन्त्रेण स्वभावतो हेतुतो वा ।

तथा–

अन्यहस्ते तु विक्रीय अन्यस्मै यः प्रयच्छति ।
सोपि तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥

अन्योत्रातदीयोऽतत्प्रयुक्त इति यावत् । अन्यत्र मूल्यं संवादं कृत्वा अन्यत्र विक्रये त्वयं दण्ड इति रत्नाकरः ।

तथा–

दीयमानं न गृह्णाति क्रीत्वा पण्यं च यः क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥

याज्ञवल्क्यः–

विक्रीतमपि विक्रेयं पूर्वं क्रेतर्यगृह्णति ।
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥

तथा–

सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिपादयेत् ।

स्वपण्यं विक्रेतव्यत्वेनाभ्युपेत्य विक्रेत्रा क्रेतृदत्तं यद्धनं गृहीतं तत् सत्यङ्कारकृतं तच्च विक्रये विमतेन तेन द्विगुणं क्रेतरि देयमित्यर्थः ।

नारदः-

लाभार्थं वणिजां सर्वपण्येषु क्रयविक्रयः ।
स च लाभोर्घ्यमासाद्य महान्भवति वा न वा ॥
तस्माद्देशे च काले च प्रक्रमेतार्घविद्वणिक् ।
न जैह्म्येन प्रवर्त्तेत श्रेयानेवं वणिक्पथः ॥
पूर्वोक्तक्रये दशाहवचनं सर्वबीजेष्वेव ।

तथा च व्यासनारदौ-

चर्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च ।
वस्त्रकूप्यहिरण्यानां सद्य एव परीक्षणम् ॥
त्र्यहाद्दोह्यं परीक्ष्येत पञ्चाहाद्वाह्यमेव च ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ॥
द्विपदामर्द्धमासं तु पुंसां तद्द्विगुणं स्त्रियाः ।
दशाहः सर्वबीजानामेकाहो लोहवाससाम् ॥

याज्ञवल्क्यः-

दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम् ।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥

एवमेवोक्तं बृहस्पतिना-

अतोर्वाक्पण्यदोषस्तु यदि संजायते क्वचित् ॥
विक्रेतुः प्रतिदेयं तत्क्रेता मूल्यमवाप्नुयात् ।
दुष्टमप्यर्वागेव देयम् ।
अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।

क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥
कालेपरीक्षाकालाभ्यन्तरे।अन्यथा तदूर्ध्वं नेत्यर्थः।
क्रेतृभिर्ज्ञातदोषे तु वस्तुमात्रे नारदः—
परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥
एतदपि सर्वं कालनियमनमपरीक्ष्य गृहीते ।
तथा च याज्ञवल्क्यः—
क्षयं वृद्धिं च वणिजां पण्यानामभिजानता ।
क्रीत्वा नानुशयः कार्यः कुर्वन्षड्भागदण्डभाक् ॥
नारदोपि—
क्रीत्वा नानुशयं कुर्याद्वणिक्पण्यविचक्षणः ।
क्षयं वृद्धिं च जानीयात्पण्यानां यस्य यादृशी ॥
क्रेता पण्यं परीक्षेत प्राक्स्वयं गुणदोषतः ।
परीक्षाभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥
बृहस्पतिः—
परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत् ।
परीक्षितं बहुमतं क्रेता च न पुनस्त्यजेत् ॥
उक्तकालादर्वागपि दाने विशेषमाह नारदः—
क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥
द्वितीयेह्नि ददत्क्रेता मूल्यात्त्रिंशांशमाहरेत् ।
द्विगुणं तु तृतीयेह्नि परतः क्रेतुरेव तत् ॥

यस्य त्र्यहःपर्यन्तमेव परीक्षणं तत्रेदम् ।

कात्यायनोपि दोह्यादौ विशेषमाह—

क्रीत्वा चानुशयात्पण्यं त्यजेद्दोह्यादि यो नरः ।
अदुष्टमेव काले तु स मूल्याद्दशमं वहेत् ॥

काले तु उक्तार्पणकाल इत्यर्थः । इदं तु वाक्यं यः स्तु क्रेत्रा न स्ववशीकृतं तत्परम् । स्ववशीकृतप भविष्यद्वा । कामतो न विरोधः ।

क्रीत्वा गच्छन्ननुशयं क्रयोहस्तमुपागतम् ।
षड्भागं तत्र मूल्यस्य दत्वा क्रीतं त्यजेद्भृगुः ॥

दोषमाच्छाद्य यदा विक्रीतं तदा बहुनापि काले परावर्त्त्यं दातुं शक्यत एव ।

तदाह मनुः—

नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ।
न सावद्यं न च न्यूनं न दूरे न तिरोहितम् ॥

अन्यत्कुङ्कुमादि । अन्येन कुसुम्भादिना । साव कुक्कुरादिलीढम् । दूरे स्वतोऽज्ञाततत्त्वम् । तिरोहित वस्त्रादिना । एतच्च सर्वमेव ज्ञातं चिरेणापि परावर्त्त्य मिति भावः ।

---

## अथ सीमाविवादः ॥ १० ॥

तत्र मनुः—

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।

ज्येष्ठे मासि नयेदेनां सप्रकाशेषु सेतुषु ॥
सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान् ॥
गुल्मान्वेणूंश्च विविधाञ्छमीवल्लीस्थलानि च ।
शरान्कुब्जकगुल्मांश्च यथा सीमा न नश्यति ॥
तडागान्युदपानानि वाप्यः प्रस्रवणानि च ।
सीमासन्धिषु कार्याणि देवतायतनानि च ॥
भूमिच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
सीमाज्ञाने नृणां वीक्ष्य लोके नित्यं विपर्ययम् ॥
अश्मनोस्थीनि गोवालांस्तथा भस्मकपालिकाः ।
करीषमिष्टकाङ्गाराञ्छर्करावालुकाश्च ह ॥
यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि सन्धिषु सीमाया अप्रकाशानि कारयेत् ।
वृक्षादावप्युपलक्षणत्वमेव ।
एतैर्लिङ्गैर्नयेत्सीमां राजा विवदतां नृणाम् ।
पूर्वभुक्त्या च सततमुदकस्यागमेन वा ॥
बृहस्पतिः—
वापीकूपतडागादिचैत्यारामसुरालयाः ।
स्थलनिम्ननदीस्रोतःशरगुल्माश्मराशयः ॥
यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्याद्विवादे सीमनिश्चयः॥

तथा–

साक्ष्यभावे च चत्वारो ग्रामसीमान्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥
सामन्तानामभावे तु मौलानां सीमसाक्षिणाम् ।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ॥
व्याधाञ्छाकुनिकान्गोपान्कैवर्त्तान्मूलखानकान्
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥
ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम् ॥
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः ॥

निगदरीतिमाह स एव–

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्ब्रूयुस्ते तु समञ्जसम् ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ।

नारदः–

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥
एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत्॥
रक्तमाल्याम्बरधरः क्षितिमारोप्य मूर्धनि ॥

सोपवासत्वमत्राधिकम् ।

बृहस्पतिः–

ज्ञातृचिह्नविनाशे तु एकोप्युभयसंमतः ।
ज्ञातॄणां चिह्नानां चेत्यर्थः ।

कात्यायनः—

कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ।
त्यक्त्वा दुष्टांस्तु सामन्तान्गत्वा मौलादिभिः सह॥
संमिश्र्य कारयेत्सीमामेवं धर्मविदो विदुः ॥

सामन्ताः सीमाप्रभवाः ।

मनुः—

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥
सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम् ।
सर्वे पृथक्पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥

सेतौ सीमासेतौ ।

कात्यायनः—

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्त्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य च ॥

समन्तात्परिरभ्येति । यः परितो वेष्टयित्वा स्थितश्चतुर्दिक्षु ग्रामादेः स एव तत्सीमासाक्षी । एवं क्षेत्रगृहयोरपीत्यर्थः ।

ये तत्र पूर्वसामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्त्तिताः ॥

नारदः—

यदा तु न स्युर्ज्ञातारः सीमायां न च लक्ष ण ।

तदा राजा द्वयोः सीमामुन्नयेदिष्टतः समम् ॥

बृहस्पतिः—

अन्यग्रामात्समाहृत्य दत्तान्यस्य यदा मही ।
महानद्याथ वा राज्ञा कथं तत्र विचारणा ॥
नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।
अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥
क्षयोदयौ जीवनं च देवराजवशा नृणाम् ।
यस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥
ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी ।
क्षयोदयेन चाल्पासौ चालयन्दण्डमर्हति ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितम् ।
नदीतीरे प्रकुरुते तस्य तां न विचालयेत् ॥

कूलपातक्रमेण या भूः सोत्तरस्वामिन एवेत्यर्थः ।

क्षेत्रं समस्तमुल्लङ्घ्य भूमिश्छिन्ना यदा भवेत् ।
नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम् ॥

क्षेत्रोल्लङ्घनेन नदीसञ्चारेऽपि लङ्घिता भूः पूर्वस्वामिन एव तिष्ठतीत्यर्थः ।

या राज्ञा क्रोधलोभेन च्छलन्यायेन वा हृता ।
प्रदत्ता ऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥
प्रमाणरहिते ह्यर्थे भुञ्जतो यस्य वा हृता ।
गुणाधिकाय वा दत्ता तस्य तां न विचालयेत् ॥

क्रोधादिना हृतापि राज्ञा निवर्त्या सीमा । अन्या तु रक्षणीयेत्यर्थः ।

याज्ञवल्क्यः—

आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥

मनुः—

क्षेत्रकूपतडागानामारामस्य गृहस्य च ।
सामन्तप्रत्ययो ज्ञेयः सीमासन्धिविनिर्णयः ॥

बृहस्पतिः—

निवेशकालादारभ्य गृहवार्यापणादिकम् ।
येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥
वातायनः प्रणाल्यश्च तथा निर्यूहवेदिकाः ।
चतुःशालस्यन्दनिकाः प्राङ्निर्दिष्टा न चालयेत् ॥

प्रणाली जलमार्गः । नागदन्तवेदिकाः निर्यूहवेदिकाः । चतुःशालं चतुर्द्वारं गृहम् । स्यन्दनिका पटलप्रान्तः । ओहालीति प्रसिद्धा ।

मेखलाभ्रमनिष्कासगवाक्षान्नोपरोधयेत् ।
प्रणालीं गृहवास्तुं च पीडयन्दण्डभाग्भवेत् ॥
निवेशसमयादूर्ध्वं नैते योज्याः कथंचन ।
दृष्टिपातं प्रणालीं च न कुर्यात्परवेश्मनि ॥

मेखला मूलबन्धः । भ्रमो जलनिर्गमः । निष्का-

५

स निःसरणपथः। नोपरोधयेत् न रुन्ध्यात्। दृष्टि-पातो गवाक्षः।

बृहस्पतिः–

वर्चःस्थानं वह्निचयं गर्त्तोच्छिष्टानुसेचनम्।
अत्यारात्परकुड्यस्य कर्त्तव्यं न कदाचन॥

वर्चःस्थानं विण्मूत्रोत्सर्गस्थानम्। अत्यारात् अति-समीपे।

कात्यायनः–

विण्मूत्रोदकचक्रं च वह्निश्वभ्रनिवेशनम्।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत्॥

चक्रं तैलादियंत्रम्।

बृहस्पतिः–

यान्त्यायान्ति जना येन पशवश्चानिवारिताः।
तदुच्यते संसरणं न रोद्धव्यं तु केन च॥

कात्यायनः–

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः।
फलं पुष्पं च संजातं क्षेत्रस्वामिषु निर्दिशेत्॥

द्वयोः क्षेत्रयोः स्वामिषु।

अन्यक्षेत्रेषु जातानां शाखाश्चान्यत्र संस्थिताः॥
स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिताः।

शाखा इति शेषः।

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि।

स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥
आपद्गतस्तथा वृद्धो गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥

परिभाषणं मा पुनरेवं कार्षीरित्यादि दण्डशून्यं वाक्यम् ।

विष्णुः—

पथ्युद्यानोदकसमीपेष्वस्थिव्युत्करादित्यागे पणशतं तच्च प्रास्येत् ।

व्युत्करोऽवकरः । गोन्दतल इति प्रसिद्धः । एवं च मूत्रपुरीषावस्करादिकं जलसमीपराजमार्गादौ कुर्वाणः पणशतं दण्ड्यः । यत्तु मनुना "कार्षापणद्वयं दण्ड्यः" इत्युक्तं तदनतिशयितसामर्थ्यादिना । अतो न विरोधः । तं मलं प्रास्येत् प्रोञ्छेत् ।

कात्यायनः—

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥

उपहन्तृद्वारा तदमेध्यं शोधयित्वा तं सार्द्धपणशतद्वयं दण्डयेत् । इदमसकृदुपघाताचरणे ।

मनुः—

गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः ॥

गृहादिस्वामिनां भयमुत्पाद्य तद्गृहादि हरन्पञ्च-

पणशतानि दण्ड्यः। स्वामित्वभ्रमेण तु हरन् द्विशतमित्यर्थः।

वृद्धमनुः–

स्थापितां चैव मर्यादामुभयोर्ग्रामयोस्तथा।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम्॥
मर्यादायाः प्रभेदे तु सीमायाः क्रामणे तथा।
क्षेत्रस्य हरणे दण्ड्या मध्यमोत्तमसाहसम्॥

मर्यादा सेत्वादि। सीमा वृक्षादिः।

शङ्खः–

क्षेत्रमर्यादाभेदे अष्टशतम्। सीमाऽव्यतिक्रमेऽष्टसहस्रम्। क्षेत्रोदकहरणेऽष्टशतम्।

अष्टभिरधिकं शतं सहस्रं च। क्षेत्रोदकं क्षेत्रनिर्वाहकमुदकम्।

नारदः–

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिद्ध्यते।
महागुणोल्पबाधश्चेद्वृद्धिरिष्टा क्षये सति॥

येन सेतुना बहुतर उपकारः क्षेत्रस्वामिनश्चाल्पपीडा सक्षेत्रिणा निवारणीयो नेत्यर्थः।

याज्ञवल्क्यः–

स्वामिनो ह्यनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत्।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः॥

क्षेत्रस्वाम्यनुमतिमनादाय तत्क्षेत्रे कृतस्य सेतोर्म-

हिम्ना यः परेषां सस्याधिगमः तत्र सेतुकर्त्ता न भोगी किन्तु क्षेत्रस्वामी । तदभावे तु राजेत्यर्थः ।

## अथ कृष्टाऽकृष्टे ।

तत्र नारदः—

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः ।
क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम् ॥

अशक्तो द्रव्यरहितः । नष्टस्त्यक्तदेशः । स कर्षकः । क्षेत्रं खिलीभूतमित्यर्थः ।

विकृष्यमाणक्षेत्रेषु क्षेत्रिकः पुनराव्रजेत् ।
खिलोपचारं तत्सर्वं दत्वा क्षेत्रमवाप्नुयात् ॥

खिलोपचारं खिलकर्षणव्ययायासनिष्क्रयम् ।

कात्यायनः—

अशक्तितो न दद्याच्चेत्खिलार्थे यः कृतो व्ययः ।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिनो हि तत् ।

क्षेत्रस्याष्टममंशं क्षेत्रस्वामी लभेत सप्तांशान्कर्षकः । अष्टवर्षाण्येवम् । ततस्तु खिलोपचारमदत्वैव स्वामी क्षेत्रं लभेत । अतिकृच्छ्रकर्षणीयखिलविषयमेतत् ।

संवत्सरेणार्द्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं च क्षेत्रं स्यादटवीसमम् ॥

एकवर्षपतितमर्द्धखिलं त्रिवर्षपतितं खिलं पञ्चवर्षपतितमरण्यं भवतीत्यर्थः ।

बृहस्पतिः–

गृहीत्वा वाहयेत्काले वापगोपनसंग्रहान् ।
अकुर्वन्स्वामिने दाप्यो मध्यं कृष्टशदं तु सः ॥

शदः सस्यम् । मध्यम् उत्पत्तेरित्यर्थः ।

व्यासः–

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्य्यान्न च कारयेत् ।
स्वामिने स शदं दाप्यो राज्ञे दण्डं च तत्समम् ॥

यत्र क्षेत्रे यद्देयं तदाह–

चिरावसन्ने दशमं कृष्यमाणे तथाऽष्टम् ।
सुसंस्कृते तु षष्ठं स्यात्परिकल्प्य यथास्थिति ॥

एतत्सर्वं मध्योत्पत्तेः । बृहस्पतिवाक्यात् । तेनाऽरण्यसमे मध्योत्पत्तेर्दशमं खिलेऽष्टमम् अर्द्धखिले षष्ठभागं क्षेत्रमङ्गीकृत्य पातयित्वा क्षेत्रिणेऽङ्गीकर्त्ता दाप्य इत्यर्थः ।

क्षेत्र्यननुमत्या क्षेत्रवापे मनुः–

ये क्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः ।
ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित् ॥
ओघवाताहतं बीजं यस्य क्षेत्रे प्ररोहति ।
क्षेत्रिकस्यैव तद्बीजं न बीजी लभते फलम् ॥

तथा–

अबीजविक्रयी चैव बीजोत्कृष्टा तथैव च ।

मर्यादाभेदकश्चैव प्राप्नुयाद्विकृतं वधम् ॥

## अथ सस्यरक्षा ।

तत्र याज्ञवल्क्यः—

ग्रामेच्छया गोप्रचारो भूमी राजवशेन वा ।
धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ॥
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ।

खर्वटो ग्रामादुत्कृष्टो नगराधमः । धनुश्चतुर्हस्तो दण्डः ग्रामिणामिच्छया वा भूम्यनुसारेण वा राजाज्ञया वा पशुचारणाय ग्रामादिकमभितो भूस्त्याज्या । सा च ग्रामे हस्तचतुःशतमिता महाग्रामे तद्द्विगुणा नगरे तच्चतुर्गुणा इत्यर्थः ।

मनुः—

धनुःशतं परीणाहो ग्रामस्य स्यात्समन्ततः ।
सम्पातास्तु त्रयो वापि त्रिगुणो नगरस्य तु ॥

नगरस्य नगरकल्पस्य ।

तत्राऽपरिवृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥

संपाताः काण्डपाताः । तत्र ग्रामपरीणाहाभ्यन्तरे ।

विष्णुः—

पथिग्रामविवीतान्ते न दोषो नावृते चाल्पकालम् ।

भक्षणे सतीति शेषः। वर्त्मग्रामपरीणाहानां समीपे यत्क्षे-

त्रमनावृतं तस्याऽल्पकालं गवादिना भक्षणे पालदोषो नास्ति। बहुकालभक्षणे तत्राऽपि दोषः । आशयापराधात् ।

तथाच याज्ञवल्क्यः–

पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ।
अकामतः कामचारे चौरवद्दण्डमर्हति ॥

विवीतं गवादिचरणस्थानम् ।

मनुः–

क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति ।
सर्वत्र तु शदो देयः क्षेत्रिकस्येति धारणा ॥

अन्येषु दूरस्थेषु । पशुविशेषे दण्डविशेषः ।

शङ्खलिखितौ–

रात्रौ चरन्ती गौः पञ्च माषान् । दिवा त्रीन् । मुहूर्त्तं माषम् ग्रामे त्वदण्ड्याः ।

माषश्चायं राजतः–

सौवर्णैर्माषकैः संख्या दण्डकर्मसु शस्यते ।
पशूनां सस्यचरणे माषैरन्यैस्तु राजतैः ॥

इति भाष्यकारवचनात् । माषश्चायं राजतकृष्णलद्वयात्मा ।

"द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः" ।

इति मनुवचनात् । रात्रौ चरन्ती यावत्सौहित्यं पञ्च माषान् । दिवा तु यावत्सौहित्यं चरन्ती त्रीन् ।

क्षणं दिवा चरन्ती माषम्। ग्रामसमीपे तु चरन्ती न दण्ड्येत्यर्थः। तद्दण्डस्तु तत्स्वामिन एव पशोरदण्ड्यत्वात्।

कात्यायनः—

दापयेत्पणपादं गां द्वौ पादौ महिषीं तथा।
तथाजाविकवत्सानां पादो दण्डः प्रकीर्त्तितः॥

पणोऽत्र कार्षापणः।

गोतमः—

पञ्च माषान्गवि। षडुष्ट्रे। अश्वमहिष्योर्दश। अजाविके द्वौ द्वौ।

शङ्खलिखितौ—

सर्वेषामेव वत्सानां माषम्।

नारदः—

सन्नानां द्विगुणो दण्डो वसतां तु चतुर्गुणः।
प्रत्यक्षचारकाणां तु चौरदण्डः स्मृतो बुधैः॥

सन्नानां सस्यभक्षणेन श्रान्तानाम्। वसतां तत्रैव चरित्वा नीतरात्रिकाणाम्। प्रत्यक्षचारकाः क्षेत्रस्वामिनि पश्यत्येव बलेन चारकाः।

नारदः—

समूलसस्यनाशे तु तत्स्वामी शदमाप्नुयात्।
वधेन गोपो मुच्येत दण्डं स्वामिनि पातयेत्॥

वधोत्र ताडनम् ।

विष्णुः–

सर्वत्र स्वामिने विनष्टसस्यमूल्यं च सपालेन विना पालेन वा ।

पशुना सस्यचरणे पशुस्वामी क्षेत्रिणे विनष्टसस्यमूल्यं राज्ञे च दण्डं दाप्य इत्यर्थः ।

नारदः–

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते ।
सामन्तानुमतं देयं धान्यं यत्तत्र नाशितम् ॥
गवत्रं गोमिना देयं धान्यं वा कर्षकाय च ।
एवं हि विनयः प्रोक्तो गवां सस्यावमर्द्दने ॥

गवत्रं धान्यस्तम्बः । गोमी गोस्वामी तेन गवत्रं धान्यं वा क्षेत्रिणे देयमित्यर्थः । ग्राह्यमप्येतन्नरकहेतुत्वान्न ग्राह्यम् ।

यथा चोशना–

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकसः ॥

पालाधिष्ठानकाले पालस्य दण्डः नो चेत्स्वामिन एव । तत्रैवं दिग्दर्शनम् ।

विष्णुः–

अपालकायास्तत्स्वामी सपालायास्तु पालकः ।

तत्रापवादमाह नारदः—

राजग्राहगृहीतोऽपि वज्राशनिहतोऽपि वा ।
अथ सर्प्पेण वा दष्टो वृक्षाद्वा पतितो भवेत् ॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमताम्॥

याज्ञवल्क्यः—

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।
पालो येषां न ते मोच्या दैवराजपरिप्लुताः ॥

महोक्षो बीजसेक्ता वृषभः।उत्सृष्टास्तु देवतोद्देशेन। सूतिका नवप्रसूता । आगन्तुका ग्रामान्तरादागता यूथविभ्रष्टा वा । पालो येषां न विद्यते इत्यर्थः । तेनापालाः सेनादिदर्शनात् गर्ज्जादिश्रवणाद्वा पलायिताः पशवो यदि क्षेत्रं चरन्ति तस्य न दोष इत्यर्थः ।

मनुः—

अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा ।
सपालान्गतपालान्वा अदण्ड्यान्मनुरब्रवीत् ॥

वृषान्बीजसेक्तॄन् ।

उशना—

अदण्ड्या हास्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः ।
अदण्ड्याः काणकुण्ठाश्च वृषश्च कृतलक्षणः ॥
अदण्ड्याऽऽगन्तुका या गौः सूतिका व्यभिचारिणी ।

अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ॥

अश्वा राजकीयास्तेषामेव प्रजापालकत्वात् । यत् "अश्वमहिष्योर्दश" इति गौतमेनोक्तं तद्गणिगाद्यश्वविषयम् । अतो न विरोधः । कुण्ठः खञ्जः । अत्र काणकुण्ठशब्दाभ्यामत्यन्ताऽक्षम उच्यते । कृतलक्षणः शूलाद्यङ्कितः । व्यभिचारिणी अत्यन्तधावनशीला । पारिजाते तु अभिसारिणीति पठित्वा वृषस्यन्तीति विवृतम्

शङ्खः—

क्षुद्रपशवोऽवश्याश्वतरगजवाजिनश्च ।

अवश्या अशक्यविधारणाः । अश्वतरो वेशवीति प्रसिद्धः ।

कात्यायनः—

अधमोत्तममध्यानां पशूनां चैव ताडने ।
स्वामी तु विवदेद्यत्र तत्र दण्डं प्रकल्पयेत् ॥

ताडकस्येति शेषः ।

अस्यापवादमाह—

क्षेत्राऽऽरामविवीतेषु गृहेषु पशुराजिषु ।
ग्रहणं तत्प्रविष्टानां ताडनं च बृहस्पतिः ।

गृहादिप्रविष्टेषु पशुषु ताडनधारणयोर्न दोष इत्यर्थः ।

---

## अथ वाक्पारुष्यम् ॥ ११ ॥

तत्र नारदः—

देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् ।

यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥

आक्रोश उच्चैर्भाषणं न्यङ्ग अवद्यं ताभ्यां संयुतं यत्प्रतिकूलार्थकं वचः तद्वाक्पारुष्यमिति सामान्यलक्षणम् । मिताक्षराप्येवम् । अन्यत्तु सकलमपि व्याख्यानमयुक्तम् । सामान्यलक्षणाक्षमत्वात् ।

तथा–

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमात्तेषां दण्डोप्युक्तक्रमाद्गुरुः ॥
साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंज्ञितम् ।
तपनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ॥
न्यङ्गसंज्ञितं मेहनाद्युल्लेखवत् ।

बृहस्पतिः–

अप्रियोक्तिस्ताडनं च पारुष्यं द्विविधं स्मृतम् ।
एकैकं तु त्रिधा भिन्नं दण्डश्चोक्तस्त्रिलक्षणः ॥
देशकालकुलादीनां क्षेपः पापे नियोजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥
भगिनीमातृसम्बन्ध उपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम् ॥

द्रव्यं विना पदार्थं विना तेनाऽसत्यम् । इदं तु

सर्वान्वयि । तेनाऽसत्यं पापाभिधानं प्रथमम् । असत्यमुपपातकाभिधानं द्वितीयम् । असत्यमहापातकाऽभिशंसनमुत्तमं वाक्पारुष्यमित्यर्थः ।

समानयोः समो दण्डो न्यूनस्य द्विगुणश्च सः ।
उत्तमस्याऽर्द्धिकः प्रोक्तो वाक्पारुष्ये परस्परम् ॥

याज्ञवल्क्यः–

अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च ।

अर्द्धता चाऽपराधाऽनुरूपा । दण्डस्य अधमता वर्णतो गुणतश्च ।

कात्यायनोशनसौ–

मोहात्प्रमादात्संहर्षात्प्रीत्या चोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दण्डार्द्धं तस्य कल्पयेत् ॥

बृहस्पतिः–

समजातिगुणानां तु वाक्पारुष्ये परस्परम् ।
विनयोऽभिहितः शास्त्रे पणास्त्वर्द्धत्रयोदश ॥

वाक्पारुष्ये योवधिभूतो दण्डः तस्य हीनेऽर्द्धम् । उत्तमे द्विगुणता ।

तमाह बृहस्पतिः–

सवर्णाऽऽक्रोशने सार्द्धद्वादशपणो दण्डः । हीनवर्णे काकिण्यधिकषट्पणो दण्डः । काणखञ्जादीनां तथा ।

याज्ञवल्क्यः–

अभिगन्ताऽसि भगिनीं मातरं यभयेरिह ।

पणं तु दापयेद्राजा पञ्चविंशतिकं दमम् ॥

शूद्राऽनुवृत्तौ बृहस्पतिः—

धर्म्मोपदेशकर्त्ता च वेदोदाहरणाऽन्वितः ।
आक्रोशकस्तु विप्राणां जिह्वाछेदात्स दण्ड्यते ॥

गोतमः—

शूद्रो द्विजातीनभिसन्धाय निहत्य च वा दण्डपारुष्याभ्यामङ्गमोच्यो येनोपहन्यात् । तेनाऽऽक्रोशे जिह्वाच्छेदः । अङ्गताडने सत्यङ्गमोच्यः । येनाङ्गेन ताडयेत्तस्य च्छेदः । अथाऽस्य वेदमुपश्शृण्वतस्त्रपुजतुना श्रोत्रपूरणम् । उदाहरणे जिह्वाच्छेदः । धारणे शरीरभेदः ।

श्रुतं देशं च जातिं च कर्म शारीरमेव च ।
वितथेन ब्रुवन्दर्पाद्दाप्यः स्याद्द्विशतं दमम् । शूद्रादन्यस्याऽपि ।

नारदः—

आक्रुश्य चैव राजानं धर्मे स्वे हि व्यवस्थितम् ।
जिह्वाच्छेदाद्भवेच्छुद्धिः सर्वस्वहरणेन च ॥

याज्ञवल्क्यः—

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाऽऽक्रोशकं तथा ।
तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वां प्रवासयेत् ॥

उशना—

यत्र नोक्तो दमः सर्वैं राजन्याच्च महात्मभिः ।

तत्र कार्य्यं परिज्ञाय सर्वस्वं दण्डधारणम् ॥
प्रपञ्चितमिदं मया[1] नीतिचिन्तामणौ ॥

## अथ दण्डपारुष्यम् ॥ १२ ॥

तत्र बृहस्पतिः–

भस्मादीनां प्रक्षेपणं ताडनं च करादिना ।
प्रथमं दण्डपारुष्यं दमः कार्योऽत्र माषिकः ॥
एष दण्डः समेषूक्तः परस्त्रीष्वधिकेषु च ।
द्विगुणस्त्रिगुणो ज्ञेयः प्रधानापेक्षया बुधैः ॥

ताडनमत्रोद्यमनमात्रम् । समेषु जात्यादिभिः । माषको राजतः माषमितः ।

स्पर्शे याज्ञवल्क्यः–

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः ॥
समेष्वेव परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनम् ॥

अमेध्यमश्रुप्रभृति । पार्ष्णिश्चरणस्य पश्चाद्भागः । निष्ठ्यूतं मुखश्लेष्मा । मोहो ज्ञानाभावः । मदो मद्यादिना । आदिपदादुन्मादादिना ।

कात्यायनः–

छर्द्दिमूत्रपुरीषाद्यैरधःसु च चतुर्गुणः ।

---

[1] मया ग्रन्थकारेण–एतेनास्य नीतिचिन्तामणिर्नामाप्यन्यो ग्रन्थोऽस्तीति वेदितव्यम् ।

षड्गुणः कायमध्ये तु मूर्ध्नि त्वष्टगुणः स्मृतः ॥

वान्तमूत्रादिना समस्य परस्याङ्गःकाये योजने दाप्यो दशपणश्चतुर्गुणः । एवं मध्याङ्गादौ षड्गुणादिरित्यर्थः ।

याज्ञवल्क्यः—

पादकेशांशुककराऽऽकर्षणेषु पणा दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥

समस्य हस्तपादकेशवस्त्रान्यतमाऽऽकर्षणे दशपणाः। तस्यैव वस्त्रावेष्टनिष्ठुराऽऽकर्षणपूर्वकस्वचरणारोपणे शतं पणा दण्ड इत्यर्थः ।

कात्यायनः—

उद्गूरणे च हस्तस्य कार्यो द्वादशको दमः ।
स एव द्विगुणः प्रोक्तः पातने च द्विजातिषु ॥

समे त्विदम् ।

बृहस्पतिः—

उद्यतेऽश्मशिलाकाष्ठे कर्त्तव्यः प्रथमो दमः ।
परस्परं हस्तपादे दशविंशतिकस्तथा ॥

उभयोरिदं हस्ते दश पादे विंशतिः काष्ठादौ द्वादश। इदमपि समयोरेव ।

विष्णुः—

हस्तेनोद्गोरयिता दश कार्षापणान् पादेन विंशतिम्

काष्ठेन प्रथमसाहसं शस्त्रेणोत्तमसाहसम् । उत्तमं प्रत्यधमश्चेच्छस्त्रमुद्यमयति तदा सहस्रं पणान्दण्ड्यः ।

याज्ञवल्क्यः-

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसम् ॥

अन्योन्यं ब्राह्मणेन ब्राह्मणं प्रति शस्त्रे उद्गूर्णे पणपञ्चशती प्रत्येकमुभयोर्दण्डः ।

मनुः-

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरन्कोपात्पादच्छेदनमर्हति ॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्वास्यः स्फिचं वास्यावकर्त्तयेत् ॥
अवष्ठीवयतो दर्पाद्द्वावोष्ठौ च्छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशर्द्धयतो गुदम् ॥
केशेषु गृह्णतो हस्तौ च्छेदयेदविचारयन् ।
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च ॥

ब्राह्मणविषये शूद्रस्य दण्डोयम् । मुखश्लेष्मणा मूत्रेण गुदशब्देन वा ब्राह्मणस्यापमानने यथाक्रममोष्ठादिच्छेदः ।

बृहस्पतिः-

मध्यमः शस्त्रसन्धाने संयोज्यः क्षुब्धयोर्द्वयोः ।

कार्यः क्षतानुरूपस्तु लग्ने घाते दमो बुधैः ॥
इष्टकोपलकाष्ठाद्यैस्ताडने तु द्विमाषकः ।
द्विगुणः शोणितोद्भेदे दण्डः कार्यो मनीषिभिः ॥
शस्त्रप्रयोगे तु विष्णुः—
दण्डयः शोणितेन विना दुःखमुत्पादयिता त्रिंशतं पणान्सह शोणितेन चतुःषष्टिम् ।
शस्त्रेणैवाऽधिकभेदने मनुः—
त्वग्भेदकः शतं दण्डयो लोहितस्य च दर्शकः ।
मांसभेत्ता तु षण्निष्कान्प्रवास्यस्त्वस्थिभेदकः ॥
निष्काश्चत्वारः सुवर्णाः ।
बृहस्पतिः—
त्वग्भेदे प्रथमो दण्डो मांसभेदे तु मध्यमः ।
उत्तमश्चास्थिभेदे तु घातके तु प्रमापणम् ॥
प्रमापणं मारणम् ।
कर्णनासाकरच्छेदे दन्तभेदेंऽघ्रिभेदने ।
कर्त्तव्यो मध्यमो दण्डो द्विगुणः पतितेषु च ॥
पतितेष्विति । स्वस्थानाद्विच्छिन्नेषु कर्णादिषु ।
कात्यायनः—
कर्णोष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
च्छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥
छेदने स्वस्थानाच्च्यावने । भेदने विदारणे ।

याज्ञवल्क्यः–

करपाददन्तभङ्गे छेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पे हते तथा ॥

च्छेदने विदारणे । व्रणोद्भेदे प्ररूढव्रणस्य पुनर्नवीकरणे । तथा ताडितो यथा मृतकल्पोऽभूत् । एतेषु प्रत्येकं पणपञ्चशती दण्डः ।

विष्णुः–

नेत्रस्कन्धबाहुसक्थिभङ्गेषु चोत्तमम् । उभयनेत्रभेदिनं राजा यावज्जीवनं बन्धनान्मोचयेत् । तादृशमेव कुर्य्यात् । पादमूलयोः सन्धिः सक्थि । तादृशं यादृशमन्यं कृतवान् ।

याज्ञवल्क्यः–

द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥

अल्पपीडासमाधेयद्विनेत्रभेदिनः राजा नङ्क्ष्यतीत्यादेशकारिणः तथा विप्रचिह्नेन यज्ञोपवीतधारणादिना जीविकां कुर्वतः शूद्रस्य च दण्डोयम् । एकस्मिन्नपराधे दण्डविकल्पाः पीडोत्कर्षापकर्षाभ्यां समाधेयाः ।

तथाऽऽह मनुः–

मनुष्याणां पशूनां च दुःखाय प्रहृते सति ।

यथा यथा महद्दुःखं दण्डं कुर्यात्तथा तथा ॥

दुःखाय दुःखमुद्दिश्य । तेन प्रमादकृते दोषो नास्तीत्यर्थः ।

नारदः—

येनाऽङ्गेनाऽवरो वर्णो ब्राह्मणस्याऽपराध्नुयात् ।
तदङ्गं तस्य च्छेत्तव्यमेवं शुद्धिमवाप्नुयात् ॥

तथा—

राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः ।
शूल्यं तमग्नौ विपचेद्ब्रह्महत्याशतातिगम् ॥

सापराधेपि राजनि कृतप्रहारं शूल्यमारोप्याऽग्नौ पचेदित्यर्थः । ब्राह्मणेतरविषयमेतत् ।

न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् ।

इति विशेषनिषेधात् ।

मनुः—

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरन्कोपात्पादच्छेदनमर्हति ॥

श्रेयांसं त्रैवर्णिकम् । अन्त्यजः शूद्रः ।

तथा—

सहासनमभिप्रेप्सुरुत्कृष्टस्यावकृष्टजः ।

कट्यां कृताङ्को निर्वास्यः स्फिचं वास्यावकर्त्तयेत्॥
कृताङ्को लौहेन । स्फिचं श्रोण्येकदेशम् ।

तथा—

अवष्ठीवयतो दर्पाद्द्वावोष्ठौ च्छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशर्धयतो गुदम् ॥
केशेषु गृह्णतो हस्तौ च्छेदयेदविचारयन् ।
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च ॥

त्रैवर्णिकोपरि दर्पाच्छ्लेष्माणं त्यजतः शूद्रस्य तु ओष्ठौ तथा मूत्रं कुर्वतो मेहनं तथा गुदशब्दं कुर्वतो गुदम् तथा केशे पादे श्मश्रुणि ग्रीवायां वृषणे वा धारयतो हस्तौ छिन्द्यादित्यर्थः ।

शूद्रस्येत्यनुवृत्तावापस्तम्बः—

वाचि पथि शय्यायामासने च समीभवतो दण्डताडनम् । वाचि युगपद्वादः । पथि तुल्यवद्गमनम् । शय्यासनयोः सहोपवेशनम् ।

कात्यायनः—

वाक्पारुष्ये यथैवोक्तः प्रतिलोमाऽनुलोमतः ।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥

बृहस्पतिः—

अङ्गावपीडने चैव भेदने च्छेदने तथा ।
समुत्थानव्ययं दाप्यः कलहापहृतं च यत् ॥

समुत्थानव्ययं सुस्थीकरणव्ययम् ।

याज्ञवल्क्यः—

एकं घ्नतां बहूनां च यथोक्ताद्विगुणो दमः ।
कलहापहृतं देयं दण्डश्च द्विगुणः स्मृतः ॥

द्विगुणो दमः प्रतिव्यक्तिकलहापहृतं कलहे यद्येन लुण्ठितम् ।

अथ मनुः—

भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।
प्राप्तापराधस्ताड्यः स्याद्रज्ज्वा वेणुदलेन वा ॥
पृष्ठतश्च शरीरस्य नोत्तमाङ्गे कदाचन ।
अतोऽन्यथा तु प्रहरन्प्राप्तः स्याच्चौरकिल्बिषम् ॥

यमः—

अतोऽन्यथा प्रवृत्तस्तु यथोक्तं दण्डमर्हति ।

शिष्यानुवृत्तावापस्तम्बः—

अपराधेषु चैनं सततमुपालभेताऽतित्रासमुपवासमुदकोपस्पर्शनमिति दण्डा यथामात्रमा निवृत्तेः । उपालम्भो रूक्षवचनम् । अतित्रासो भीत्युत्पादनम् । उदकोपस्पर्शनं पानीयसेचनम् । शीतकालेत्विदम् । यथामात्रं तच्छक्त्यनुसारेण । आ निवृत्तेः अपराधस्येति शेषः ।

नारदः—

पुत्राऽपराधेन पिता श्ववांश्च शुनि दण्डभाक् ।

न मर्कटे तु तत्स्वामी तेनैव प्रहितो न चेत् ॥

याज्ञवल्क्यः—

शक्तो ह्यमोक्षयन्स्वामी दंष्ट्रिणां शृङ्गिणां तथा ।
प्रथमं साहसं दण्ड्यो विक्रुष्टे द्विगुणं तथा ॥

श्वादिस्वामी शक्तः सञ्छ्वादिग्रस्तं न चेद्रक्षेत्तदा प्रथमं साहसं, स्वं श्वानमपसारयेत्याद्युक्तोपि न चेद्रक्षेत्तदा स मध्यमं दण्ड्य इत्यर्थः ।

कात्यायनः—

हेत्वादिभिर्न पश्येच्चेद्दण्डपारुष्यकारणम् ।
तदा साक्षिकृतं तत्र दिव्यं वा विनियोजयेत् ॥

साक्ष्यभावे च दिव्यम् ।

नारदः—

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ।
पश्चाद्यः सोप्यसत्कारी पूर्वे तु विनये गुरुः ॥

आक्षारयेत्परुषं वदेत् ।

कात्यायनः—

आभीषणेन दण्डेन प्रहरेद्यस्तु मानवः ।
पूर्वं वा पीडितो वाथ स दण्ड्यः परिकीर्त्तितः ॥

आभीषणेन खड्गादिना ।

बृहस्पतिः—

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन् ।

हत्वाततायिनं चैव नापराधी भवेन्नरः ॥
वाक्पारुष्यादिना नीचो यः सन्तमभिलङ्घयेत् ।
स एव ताडयंस्तस्य नान्वेष्टव्यो महीभुजा ॥

नीचः शूद्रादिः । सन्तं ब्राह्मणादिकम् । स एव ब्राह्मणादिस्तस्य शूद्रादेः । हिंसार्थे षष्ठी । नान्वेष्टव्यो न दण्डचइत्यर्थः ।

नारदः—

श्वपाकपण्डचाण्डालवेश्यावधकवृत्तिषु ।
हस्तिपव्रात्यदासेषु गुर्वाचार्यातगेषुच ॥
मर्यादाऽतिक्रमे सद्यो घात एवाऽनुशासनम् ।
न च तद्दण्डपारुष्ये दोषमाहुर्मनीषिणः ॥
यमेते ह्यतिवर्तेरन्नोत्तमस्तान्नृपं नयेत् ॥
स एव विनयं कुर्यान्न तद्विनयभाङ्नृपः ।
मला ह्येते मनुष्याणां धनमेषां मलात्मकम् ॥
अतस्तान्घातयेद्राजा नार्थदण्डेन दण्डयेत् ।

श्वपाकेति । शूद्रायां क्षत्रियाज्जाता उग्रा । शूद्रात्क्षत्रियायां जातः क्षत्ता । क्षत्तुरुग्रायां जातः श्वपाकः । पण्डः क्लीबः । चण्डालोऽत्र ब्राह्मण्यां शूद्राज्जातः । वधकवृत्तिर्लुब्धकधीवरादिः । हस्तिपो हस्त्यारोहकः । व्रात्यः प्रसिद्धः । दासश्चेटकः । घातस्ताडनम् । तच्च यथापराधम् ।

कात्यायनः–

अस्पृश्यधूर्त्तदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः ॥

पापकारिणोऽतिशयेन प्रातिलोम्यप्रसूता निषादादयः ।

विष्णुः–

अजाऽश्वोष्ट्रघाती ह्येककरपादः कार्यः । विमांसविक्रयी च ग्रामपशुघाती च कार्षापणशतं दण्ड्यः । पशुस्वामिनस्तन्मूल्यं दद्यात् । पशूनां पुंस्त्वोपघातकारी च अरण्यपशुघाती च पञ्चाशतं कार्षापणान्पक्षिमत्स्यघाती च दशकार्षापणम् ।

अतज्जीविनामेष दण्डः । विमांसमभक्ष्यमांसम् ।

मनुः–

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥

याज्ञवल्क्यः–

प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणां तु विंशतेर्द्विगुणो दमः ॥
चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणा दमा वृक्षेऽथ विश्रुते ॥
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्द्धदण्डः स्थानेषूक्तेषु कृन्तने ॥

प्ररोहिशाखिनो वटादयः । उपजीव्यद्रुमाः पिप्पलादयः।सर्वविदारणं मूलच्छेदनम्। तथा चैतेषां वृक्षाणां शाखाच्छेदने विंशतिपणाः। स्कंधच्छेदने चत्वारिंशत् । मूलच्छेदने अशीतिपणा दण्डः । गुल्मादौ तु दशपणात्मको दमः । उक्तस्थानेषु च्छेदे कृते सत्येवं वर्द्धेत इत्यर्थः । क्षुपा ह्रस्वशाखाः। शिफाः शाखोटादयः ।

दण्ड्य इत्यनुवृत्तौ विष्णुः—

फलोपगद्रुमच्छेदी तूत्तमसाहसम्। पुष्पोपगद्रुमच्छेदी मध्यमम्। वल्लीगुल्मलताच्छेदी कार्षापणशतम्। तृणच्छेदी एकं कार्षापणम्। सर्वे च तत्स्वामिनां तदुत्पत्तिम् ।

दद्युरिति शेषः।

---

## अथ स्तेयम् ॥ १३ ॥

तत्र मनुः—

तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्ततः ।
कुर्वीत शासनं राजा सम्यक्सारापराधतः ॥

तेषां चौराणाम् । प्रकरणात् । अपहृतद्रव्यस्य सारानुसारेण शासनं राज्ञा कार्यमित्यर्थः ।

बृहस्पतिः—

संसर्गचिह्नलोप्त्रैश्च विज्ञाता राजपूरुषैः ।

प्रदाप्यापहृतं शास्या दमैः शास्त्रप्रचोदितैः ॥

संसर्गः प्रमितैश्चौरैः सह मिलनम्। चिह्नं चौरत्वलिङ्गं सन्धिखनित्रादि। लोप्त्रं। चोरितद्रव्यम्।एषामन्यतमेनाऽपि चौरमवधार्य चोरितद्रव्यं तद्द्वारा द्रव्यस्वामिने प्रदाप्य राजा शास्त्रदृष्टेन दण्डेन तं शमयेदित्यर्थः।

मनुः—

परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः।
स्तेनानां निग्रहादस्य यशो राष्ट्रं च वर्द्धते ॥
अभयस्य तु यो दाता स पूज्यः सततं नृपः।
सत्रं हि वर्द्धते तस्य सदैवाऽभयदक्षिणम् ॥
अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥

परिहीयते स इत्यन्वयः। चौराश्च द्विविधाः प्रकाशा अप्रकाशाश्च। तत्र प्रकाशचौरा वणिगादयः। अप्रकाशचौराः सन्धिकारादयः।

तत्र आद्येषु व्यासः—

तुलामानविशेषेण लेख्येन गणनेन च।
अर्घस्य वृद्धिह्रासेन मुष्णन्ति वणिजो जनान् ॥
तद्द्रव्यं सदृशैर्द्रव्यैर्हीनमूल्यैर्विमिश्रणम्।
कुर्वन्त्यौपयिकाश्चान्ये पण्यानां परिवर्त्तनम् ॥

याज्ञवल्क्यः—

मानेन तुलया वापि योंऽशमष्टममाहरेत्।

दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ॥

वाकारोऽनास्थायाम्। तेन येन केनाऽपिच्छद्मप्रकारेण कपटतुलादिना यः परद्रव्यस्याष्टमांशमपहरति स पणशतद्वयं दण्डं दाप्यः । यस्तु नवमांशं सोऽष्टमभागन्यूनं द्विशतं, यश्च सप्तमांशं स साष्टमभागं द्विशतं दाप्य इत्यर्थः ।

कात्यायनः—

तुलामानप्रतीमानप्रतिरूपकलक्षितैः ।
चरन्नलक्षितैर्वापि प्राप्नुयात्पूर्वसाहसम् ॥

प्रतीमानं परिमाणेति प्रसिद्धम् । एतैश्चरन् व्यवहरन् सार्द्धशतद्वयं दाप्यः । एतच्चाष्टमं साधिकत्वमधिकच्छद्मकरणपक्षे । तेन न याज्ञवल्क्योक्तद्विशतदमविरोधः ।

मनुः—

समैर्हि विषमं यस्तु चरेद्वै मूल्यतोऽपि वा ।
स प्राप्नुयाद्दमं पूर्वं नरो मध्यममेव च ॥

समैः साधारणैर्वस्तुभिर्विषमं विलक्षणं वस्तुपरिवर्त्तेन मूल्येन वा गृह्णन् षष्ठभागहानौ सार्द्धपणशतद्वयं पञ्चमादिभागहानौ तु पञ्चपणशती दमं दाप्य इत्यर्थः ।

तथा—

अबीजविक्रयी यस्तु बीजोत्क्रुष्टा तथैव च ।

मर्यादाभेदकश्चैव प्राप्नुयाद्विकृतं वधम् ॥

अबीजं बीजतया यो विक्रीणीते यो वा परोप्तं क्षेत्रं बलेन हरति यो वा देशस्य जातेर्वा कुलस्य वा शास्त्रस्य वा राजलोकस्य वा स्थितिमतिक्रामति स कर्णादिच्छेदनमर्हतीत्यर्थः ।

बृहस्पतिः–

प्रच्छन्नदोषं व्यामिश्रं पुनः संस्कृतविक्रयी ।
पण्यं तद्द्विगुणं दाप्यो वणिग्दण्डं च तत्समम् ॥

संगुप्तदोषमपद्रव्यामिश्रितं वा शाणादिना पुनर्नवीकृतं वा योविक्रीणीते स कृतभाजनाद्द्विगुणं भाजनादिकं क्रेतरि क्रीतद्रव्यसमं च दण्डं राजनि दाप्य इत्यर्थः ।

याज्ञवल्क्यः–

भेषजस्नेहलवणगन्धधान्यगुडादिषु ।
पण्येषु हीनं क्षिपतः पणा दण्डस्तु षोडश ॥

यथोक्तं द्रव्यं विक्रीणन्परद्रव्येण विमिश्रित्य यो विक्रीणीते तस्य षोडशपणा दण्ड इत्यर्थः । गुरुमूल्यकद्रव्येषु बृहस्पत्युक्ता लघुमूल्यकेषु याज्ञवल्क्योक्ता व्यवस्था इत्यविरोधः ।

मिथ्या वदन्परीमाणं शुल्कस्थानादपाक्रमन् ।
दाप्यस्त्वष्टगुणं यश्च स व्याजक्रयविक्रयी ॥

पण्यस्य परिमाणमतथ्यं वदन् क्रयादौ कर्त्तव्ये

आपणं परिहरन्सकपटं क्रयं विक्रयं वा कुर्वन् प्रकृत-पण्यादष्टगुणं दण्डं दाप्य इत्यर्थः।

विष्णुः—

शुल्कस्थानमपाक्रामन्सर्वापहारमाप्नुयात्।

विक्रयादौ कर्त्तव्ये आपणं परिहरन् सर्वस्वं दाप्य इत्यर्थः। इदमभ्यासे, याज्ञवल्क्योक्तं त्वनभ्यास इत्यविरोधः।

शङ्खः—

कूटतुलामानप्रतिमानव्यवहारे शारीरोङ्गच्छेदो वा कूटतुलामानेन कूटप्रतिमानेन वा यो व्यवहरति तस्य मुण्डनं यस्तु तच्छीलस्तस्य कर्णाद्यन्यतमच्छेदः कार्य इत्यर्थः। अर्थलाघवगौरवाभ्यामत्र व्यवस्थेत्यन्ये।

याज्ञवल्क्यः—

तुलाशासनमानानां कूटकृत्कानकस्य च।
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम्॥

यस्तुलां वा राजपत्रादिकं वा ताम्रादिकं वा मुद्रां वा कूटान्निर्माति यो वा तेन व्यवहरति स पणसहस्रं दण्ड्य इत्यर्थः।

तथा—

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम्।
स कानकपरीक्षी तु दाप्य उत्तमसाहसम्॥

कानको मुद्रापो मुद्रापरीक्षको दौरात्म्यादिन मन्दां भद्रां भद्रां वा मन्दां ब्रूते स सहस्रपणान्दण्ड इत्यर्थः।

दण्ड उत्तमसाहस इत्यनुवृत्तौ विष्णुः–

प्रतिरूपकविक्रायकस्य च।

प्रतिरूपकं कृत्रिममुक्तादि।

याज्ञवल्क्यः–

सम्भूय कुर्वतामर्घं सावाधं कारुशिल्पिनाम्।
अर्घस्य हानिं वृद्धिं च साहस्रो दण्ड उच्यते॥

कारुः प्रतिमादिघटकः। शिल्पी चित्रकरः। कारं शिल्पिनो वा अतिपीडाकरमर्घं सम्भूय कुर्वतां वणि जां तथा राजस्थापितस्य मूल्यस्य ह्रासं वृद्धिं व सम्भूय कुर्वतां तेषां पणसहस्रात्मको दण्डो भवती त्यर्थः।

तथा–

सम्भूय वणिजां पण्यमनर्घेणावरुन्धताम्।
विक्रीणतां वा विहितो दण्ड उत्तमसाहसः॥

ये वणिजो बहुमूल्यमल्पमूल्येनच्छद्मादिना क्रीण न्ति ये वाऽल्पमूल्यं बहुमूल्येन विक्रीणते ते पणस हस्रं दण्ड्या इत्यर्थः।

मनुः—

राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च ।
तानि निर्हरतो लोभात्सर्वहारं हरेन्नृपः ॥

यानि करितुरगादीनि राजयोग्यानि यानि वा राज्ञा निवारितक्रयविक्रयाणि तानि राजाज्ञावारणेन विक्रीणानस्य तद्विक्रयप्राप्तं सकलमेव धनं राजा गृह्णीयादित्यर्थः ।

मनुः—

शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः ।
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥

विष्णुः—

स्वदेशपण्याच्छुल्कांशं दशममादद्यात् ।
परदेशपण्याच्च विंशतितमम् ॥

स्वदेशे क्रीत्वा विक्रीते यावती वृद्धिः प्राप्ता तस्या दशमं भागं, परदेशे क्रीत्वा स्वदेशे विक्रीते यावती वृद्धिरायाता तस्या विंशतितमं भागं राजा गृह्णीयादिति वाक्ययोरर्थः ।

गोतमः—

विंशतिभागः शुल्कः पण्ये मूलपुष्पौषधिमांसमधुतृणेन्धनानां तु षष्ठः ।

मूलादीनां सप्तानामपि परदेशात्क्रीत्वाऽऽनीय स्वदेशे विक्रीतानां वृद्धेः षष्ठांशो राज्ञा ग्राह्य इत्यर्थः ।

वसिष्ठः—

शुल्के चाऽपि श्लोकमुदाहरन्ति ।
न भिन्नकार्षापणमस्ति शुल्कं
न शिल्पवृत्तौ न शिशौ न दूते ।
न भैक्ष्यलब्धे न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञे ॥

भिन्नो न्यूनः । तेन कार्षापणन्यूनमूल्ये पण्ये राजग्राह्यं नास्ति । एवं शिल्पनिर्माणेन प्राप्ते तथा वत्सादिमूल्ये तथा दौत्येन प्राप्ते तथा चौरहृतावशिष्टे पण्ये तथा श्रोत्रिये यतौ वा विक्रेतरि तथा यज्ञार्थमानीते राजग्राह्यं नास्तीत्यर्थः ।

विष्णुः—

उत्तमं साहसं दण्ड्यो भिषङ्मिथ्या चरन्नुत्तमेषु मध्यमं मध्यमेषु प्रथमं तिर्यक्षु ।

व्यासः—

अनिच्छन्तमभूमिज्ञं संयोज्य व्यसने नरम् ।
अपकर्षन्ति तद्द्रव्यं वेश्याकितवशिल्पिनः ॥

अभूमिज्ञं कृत्याऽकृत्यानभिज्ञम् । एते विश्रब्धवञ्चका इति भावः ।

बृहस्पतिः—

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।

विश्रब्धवञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥

याज्ञवल्क्यः—

उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।

तथा—

वसानस्त्रीन्पणान्दाप्यो नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान्दश ॥

अवक्रयं भोटकम् । आधानं बन्धकीकरणम् ।

बृहस्पतिः—

दण्डादियुक्तमात्मानं दर्शयन्ति मृषा तु ये ।
हिंसन्ति च्छद्मना नॄन्ये वध्यास्ते राजपूरुषैः ॥

मनुः—

सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ।
प्रवर्त्तमानमन्याये च्छेदयेल्लवशः क्षुरैः ॥

कण्टकः प्रकाशतस्करः । प्रवर्त्तमानमिति नित्यप्रवृत्तौ लट् । तेनाऽभ्यासे शास्तिरियमित्याहुः ।

याज्ञवल्क्यः—

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
अङ्गहीनः प्रकर्त्तव्यो दाप्यश्चोत्तमसाहसम् ॥

असुवर्णे औषधादियोगात्सुवर्णभ्रमसुत्पाद्य यःकरादिव्यवहारं करोति । यश्च श्वादिमांसं हरिणादिमांसत्वेन प्रकाश्य विक्रीणीते स पणसहस्रं दण्डमादाय नासादन्तकरशून्यः कार्य इत्यर्थः ।

तथा-

अजातौ जातिकरणे विज्ञेयोऽष्टगुणो दमः ।

लघुमूल्यके वस्तुनि कौशलेन बहुमूल्यकरस्तु साहश्यमुत्पाद्य विक्रीय प्रकृतमूल्यादधिकं यत्स लभते तदष्टगुणं दमं दाप्यः ।

समुद्रपरिवर्त्तं च सारभाण्डं च कृत्रिमम् ।
आधानं विक्रयं वाऽपि नयतो दण्डकल्पना ॥
भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते ॥
द्विगुणो द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान् ॥

समुद्रः सम्पुटः । सारभाण्डं सारभूतं पण्यं मृगमदादि । तथा च तुच्छं सम्पुटं पूर्णत्वेन प्रकाश्य कृत्रिमं वस्तु तात्विकत्वेन प्रकाश्य न्यसतो विक्रीणानस्य वा दण्डः।तमेवाह-भिन्न इति।भिन्नं न्यूनम् । अर्थात्पणात्। तेनार्द्धपणमूल्यके वस्तुन्यसत्येव वस्तुत्वेन प्रकाश्य न्यस्ते विक्रीते वा तथा तावत्येव कालपनिके मृगमदादौ तात्विकत्वेन प्रकाश्य न्यस्ते विक्रीते वा पञ्चाशत्पणाः । पणमूल्यके तु पणशतं द्विपणमूल्यके पणशतद्वयम् । एवं शतादिगुणो दण्ड इत्यर्थः ।

बृहस्पतिः-

स्वल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
स्त्रीबालकान्वञ्चयन्ति दण्ड्या अर्थानुरूपतः ॥

हेममुक्ताप्रवालाद्यं कुर्वते कृत्रिमं तु ये ।
क्रेत्रे मूल्यं प्रदाप्यास्ते राज्ञे च द्विगुणं दमम् ॥

याज्ञवल्क्यः—

अग्नौ सुवर्णमक्षीणं द्विपलं राजते शते ।
अष्टौ हि त्रपुसीसे तु ताम्रे पञ्च दशायसि ॥

सुवर्णं शुद्धसुवर्णम् । अन्यादृशस्य क्षयित्वादिति । तेन शुद्धसुवर्णे नक्तन्दिनमपि ध्मायमाने क्षयो न भवति । तथा राजतपलशते पलद्वयमेव । तथा तावति शुद्धे त्रपुणि सीसे वा अष्टपलमेव । तथा तावति ताम्रे पलपञ्चकम् । तादृशेऽयसि दश पलानि क्षीयन्त इत्यर्थः । तथा च ततोऽधिकं क्षयं वदन् वणिग्दण्ड्य इति भावः ।

याज्ञवल्क्यः—

शते दशपला वृद्धिरौर्णे कार्पासिके तथा ।
मध्ये पञ्चपला सौत्रे सूक्ष्मे तु त्रिपला स्मृता ॥

स्थूलसूत्रे कार्पासिके आविके वा शतपलमितेऽवपणाय प्रयुक्ते उक्ते दशपलाधिकं वासो भवति । मध्यविधसूत्रे पञ्चपलाधिकं सूक्ष्मसूत्रे त्रिपलाधिकमित्यर्थः ।

## अथाप्रकाशतस्करदण्डः ।

तत्र मनुः—

सन्धिं कृत्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।

तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥

व्यासः—

सन्धिच्छेत्ताऽनेकविधं धनं प्राप्नोति वै गृहात् ।
प्रदाप्य स्वामिने सर्वं हृतं शूले निवेशयेत् ॥

बृहस्पतिः—

सन्धिच्छिदोऽसकृद्धचेताञ्छूलमारोपयेत्ततः ।
तथा पान्थमुषो वृक्षे गले बद्धाऽवलम्बयेत् ।

सन्धिचौराः स्वापहृतधनानि स्वामिने प्रदाप्य हस्तौ छित्त्वा तीक्ष्णे शूले निवेश्याः । वाटपाटच्चरास्तु वृक्षादावुद्बन्धनीया इति वर्त्तुलार्थः ।

बृहस्पतिः—

मनुष्यहारिणो राज्ञा दग्धव्यास्तु कटाग्निना ।
स्त्रीहर्त्ता लोहशयने दग्धव्यो वै कटाग्निना ॥

कटो वीरणः । एतच्च कुलीनयोः स्त्रीमनुष्ययोर्हरणे द्रष्टव्यम् ।

तदाह मनुः—

पुरुषाणां कुलीनानां नारीणां च विशेषतः ।
मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥

मुख्यं मरकतादि ।

व्यासः—

नरहर्त्ता हस्तपादौ च्छित्त्वा स्थाप्यश्चतुष्पथे ।
इदं तु मध्यविधपुरुषापहरणे ।

पुरुषं हरतः प्रोक्तो दण्ड उत्तमसाहसः ।
इदं मध्यविधपुरुषापहरणे ।
सर्वस्वं हरतो नारीं कन्यां तु हरतो वधः ।
इदमपकृष्टनार्यपहरणे ।

मनुः—

गोषु ब्राह्मणसंस्थासु तूलिकायाश्च भेदने ।
पशूनां हरणे चैव सद्यः कार्योऽर्द्धपादिकः ॥
महापशूनां हरणे शस्त्राणामौषधस्य च ।
कालमासाद्य कार्यश्च राजदंडं प्रकल्पयेत् ॥

तूलिका नासा । भेदनं रन्ध्रकरणम् । कालो युद्धादेः । कार्यमारोहणादि । तेन युद्धाद्यवसरेऽश्वाद्यपहरणमतिदण्डाय । महापशवो हस्त्यश्वादयः ।

नारदः—

महापशून्स्तेनयतो दण्ड उत्तमसाहसः ।
मध्यमो मध्यमपशून्पूर्वः क्षुद्रपशौ हृते ॥
व्यवस्था विष्णुवाक्योक्ता ।

व्यासः—

अश्वहर्त्ता हस्तपादौ कटिं छित्त्वा प्रमाप्यते ।

याज्ञवल्क्यः—

बन्दिग्रहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्य घातिनश्चैव शूलमारोपयेन्नरान् ॥

कोष्ठागारायुधागारदेवतागारभेदिनः ।
हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारितः ॥

विष्णुः–

गोऽश्वोष्ट्रगजापहारकः एककरपादिकः कार्यः । अजाद्यपहार्येककरश्च करितुरगावत्यन्ताऽपकृष्टावुक्तौ। शास्यो वा गुणवान् ।

समयो वा न युद्धस्य इत्यतः शास्तिलाघवम् ।

व्यासः–

पशुहर्त्तुश्चार्द्धपादमतीक्ष्णे शस्त्रे कर्त्तयेत् ।
तस्यैकपादं कुण्ठकुद्दालादिना छिन्द्यादित्यर्थः॥

मनुः–

असन्दितानां सन्दाता सन्दितानां विमोक्षकः ।
दासाश्वरथहन्ता च प्राप्तः स्याच्चौरकिल्बिषम् ॥

अपहरणार्थमबद्धान्बध्नन् बद्धान् विमोचयन् वा दासाद्यन्यतमविनाशी वा चौरवच्छास्यः ।

मनुः–

अङ्गुलीं ग्रन्थिभेदस्य च्छेदयेत्प्रथमागमे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥

चौरार्थं परपशोर्बन्धनग्रन्थिं विमोचयतः प्रथमे विमोचनेऽङ्गुलीच्छेदः, द्वितीये हस्तपादच्छेदः, तृतीये वधः कार्यः ।

याज्ञवल्क्यः—

उत्क्षेपकग्रन्थिभेदौ करसन्दंशभेदकौ ॥

यश्चौरार्थं परपशूनभ्याजयति बन्धनविमोक्षं वा तेषां करोति तस्याङ्गुष्ठतर्ज्जन्यौ च्छेद्ये इत्यर्थः ।

बृहस्पतिः—

धान्यं दशभ्यः कुम्भेभ्यो हरतोप्यधिकं वधः ।
शेषेप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥

प्रमाणस्थपुरुषस्य प्रमाणस्थकरचरणस्य द्वादशभिः प्रसृतिभिः कुडवो भवति । चतुर्भिः कुडवैः प्रस्थो भवति । विंशतिप्रस्थैः कुम्भ इति रत्नाकरादयः । ईदृशदशकुम्भाश्च पुरुषाहारमानेन खारीति मैथिलाः । इतोप्यधिकं धान्यमपहरन्मारणीयः । न्यूनं त्वपहरन् तत्समं धान्यं स्वामिनि तदेकादशगुणं च राजनि दण्डत्वेन दाप्य इत्यर्थः । अन्ये तु—

पलं च कुडवः प्रस्थ आढको द्रोण एव च ।
धान्यमानेन बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥
द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते ।
कुम्भैस्तु दशभिर्वाहो धान्यसङ्ख्या प्रकीर्तिता ॥

विंशत्या द्रोणैरित्यन्वयः ।

एतद्वाक्यानुसारेण च कुम्भमाहुः—

क्षेत्रिकस्यात्यये दण्डो भागाद्दशगुणो भवेत् ।

ततोऽर्द्धं दण्डो भृत्यानामज्ञानात्क्षेत्रिकस्य तु ॥

सस्यभागव्यवस्थया भूकर्षकस्य दोषेण सस्यनाशे स्वभागाद्दशगुणस्तस्य दण्डः। तद्भृत्यस्य दोषेण तन्नाशे स्वभागात्पञ्चगुणः कर्षकस्य दण्ड इत्यर्थः। अयं च दण्डो राजग्राह्य इत्यर्थः। भूस्वामी तु तद्विनाशितं स्वग्राह्यं सस्यभागं ततो लभत इति द्रष्टव्यम्।

काष्ठभाण्डाद्युपक्रम्य नारदः–

तुलाधरिममेयानां गणिमानां च सर्वशः।
एभिस्तूत्कृष्टमूल्यानां मूल्याद्दशगुणो दमः॥

तुलाधरिमं कर्पूरादि। मेयं व्रीह्यादि। गणिमं पूगैलाप्रभृति। एभिः काष्ठादिभिः। तेन पूर्वोक्तकाष्ठाद्यपेक्षयाऽधिकमूल्यानां धरिममेयगणिमानामन्यतमस्यापहारे तन्मूल्याद्दशगुणो दण्ड इत्यर्थः।

मनुः–

तुलाधरिममेयानां शतादप्यधिके वधः।
सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते।
शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥

हेम्नो रजतस्य वा शतकर्षाधिकस्य तथा वाससो वा शताधिकमूल्यस्य हर्त्ता वध्यः। पञ्चाशदधिकस्य तु तस्य हर्त्ता छिन्नहस्तः कार्यः। तदूनमूल्यस्य तस्य

हर्त्ता एकादशगुणं तन्मूल्यं दाप्यः । स्वापहृतवस्तु-दानं तु कल्पत्रयेऽपि ।

शङ्खः—

सुवर्णरजतापहारे शारीरोङ्गच्छेदो वा यत्किञ्चि-त्स्वल्पं सुवर्णं रजतं वाऽपहरन्नभ्यर्हितस्ताडनीयस्त-दूनश्छिन्नकर्णः कार्यः ।

विष्णुः—

रत्नापहार्युत्तमसाहसम् । अपकृष्टरत्नापहारी सहस्रं पणान् दण्ड्यः ।

शङ्खः—

अष्टशतं सीताद्रव्याऽभिहरणे यथाकालम् ।
कृषिसमयेऽपहरन्नष्टाधिकं शतं दण्ड्यः ॥

मनुः—

परिपूतेषु धान्येषु शाकमूलफलेषु च ।
निरन्वये शतं दण्डः सान्वयेर्द्धशतं दमः ॥

निष्पुलाकीकृतेषु खलस्थेषु स्वल्पधान्येषु अप-हृतेषु शाकमूलफलेषु वा तत्स्वामिसम्बन्धशून्यः शतं तत्सम्बन्धवांस्तु पञ्चाशतं पणान्दण्ड्यः ।

तथा—

पुष्पे हरितधान्ये च गुल्मवल्लीनगेषु च ।
अल्पेष्वपरिपूतेषु दण्डः स्यात्पञ्च कृष्णलाः ॥

कुसुम्भादौ तथा हरितधान्ये घासरूपधान्ये । तथा तावन्न्यूनेषु सपुलाकेषु खलधान्येषु गुल्मलतायां वृक्षे वा अपहृते सुवर्णमाषो दण्डः ।

व्यासः–

अल्पधान्याऽपहरणे क्षीरे तद्विकृतौ तथा ।
स्वामिने तत्समं दाप्यो दण्डं च द्विगुणं नृपे ॥

मनुः–

सूत्रकार्पासकिण्णानां गोमयस्य गुडस्य च ।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥
वेणुवैणवभाण्डानां लवणानां तथैव च ।
मृन्मयानां च हरणे मृदो भस्मन एव च ॥
मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत्पशुसम्भवम् ॥
अन्येषामेवमादीनां मद्यानामोदनस्य च ।
फलानां चैव सर्वेषां हरणे द्विगुणो दमः ॥

इदमल्पसूत्रादिहरणे ।

यश्चैतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः ।
तं शतं दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥

एतानि सूत्रादीनि उपभोगार्थं संस्कृतानि । अग्निं श्रौतं स्मार्त्तं वा ।

नारदः–

काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च ।

वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम् ॥
शाकानामार्द्रमूलानां हरणे फलपुष्पयोः ।
गोरसे तद्विकाराणां तथा लवणतैलयोः ॥
पक्वान्नानां कृतान्नानां मद्यानामोदनस्य च ।
सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दमः ॥
इदं प्रचुरकाष्ठादिविषयम् ।

मनुः—

यस्तु रज्जुघटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम् ।
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन्समाहरेत् ॥

रज्जुघट इति समाहारद्वन्द्वः । रज्जुं घटं वा कूपाद्यो हरति स कूपे तन्नियोजयेत् । माषं च दण्डं प्रपाभेदे च दद्यात् ॥

विष्णुः—

अनुक्तद्रव्याणामपहर्त्ता मूल्यसमं दमम् ।
दाप्य इत्यनुषङ्गः ।

नारदः—

साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेषु द्रव्येषु त्रिष्वनुक्रमात् ॥

अनुक्तविशेषेषु उत्तममध्यमाधमेषु वस्तुष्वियं व्यवस्था ।

कात्यायनः—

येन येन परद्रोहं करोत्यङ्गेन तस्करः ।

छिन्द्यात्तत्तन्नृपस्तस्य न करोति यथा पुनः॥

बृहस्पतिः–

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
अनापृच्छय तु गृह्णानो हस्तच्छेदनमर्हति ॥

इदमप्युत्कृष्टस्वामिकतृणादिविषयम् ।

गोतमः–

ब्राह्मणस्य न शारीरो दण्डः । कर्मवियोगविख्यापनविवासनाङ्ककरणानि स्ववृत्तौ प्रायश्चित्ती तु सः ॥

कर्मवियोगः चौरेण ब्राह्मणेन सह सद्भिः कापि क्रिया न कर्त्तव्या । विख्यापनं खरारोहादिना चौरत्वं तस्य ख्यापनीयम्।विवासनं देशाद्बहिष्करणम्।ललाटे चौरचिह्नकरणमङ्ककरणम् । स्ववृत्तौ प्रायश्चित्ती सः प्रकारान्तरेण जीवनाऽक्षमो ब्राह्मणश्चौरोपि सन्न हस्तच्छेदादिना दण्ड्यः । किन्तु हृतं वस्तु दत्वा तच्चौर्यप्रायश्चित्तं कुर्यादित्यर्थः ।

आपस्तम्बः–

पुरुषवधस्तेयभूम्यादानेषु ।

स्तेयं सुवर्णहरणम् । एतेषु त्रिषु ब्राह्मणेतरस्य वधः । ब्राह्मणस्य चक्षुरुत्पाटनम् । इदमधमब्राह्मणपरम् ।

नारदः–

अन्यायोपात्तवित्तत्वाद्धनं तेषां मलात्मकम् ।

ततस्तान्घातयेद्राजा नार्थदण्डेन दण्डयेत् ॥

तान्ब्राह्मणेतरचौरान् ।

शङ्खः—

ब्राह्मणस्य तु मौण्ड्यमितरेषां खरयानम् ।

ब्राह्मणस्य यागादिपरस्य । इतरेषां क्षत्रादीनां मध्यमानां स्तेनाः सर्व एवापहृतं धनिकस्य धनं दाप्याः । ततस्तेषामभिहितदण्डप्रयोगः ।

याज्ञवल्क्यः—

चौरं प्रदाप्याऽपहृतं घातयेद्विविधैर्वधैः ।

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥

चिह्नं ललाटे भगाद्यङ्कनम् । इदं मध्यविधब्राह्मणपरम् ।

ब्राह्मणाधिकारे कात्यायनः—

सहोढमसहोढं वा मत्वा गमितसाहसम् ।

प्रगृह्याच्चिह्नमावेद्य सर्वस्वेन वियोजयेत् ॥

अयःसन्दानगुप्ताश्च मन्दभक्ता गुणान्विताः ।

कुर्युः कर्माणि नृपतेरा मृत्योरिति कौशिकः ॥

सहोढं लोप्त्रम् । सर्वस्वेनेति। इदं तु वृत्तस्वाध्यायरहितधनवद्ब्राह्मणपरम् । निगडबन्धनकिञ्चिद्भक्ष्यदानराजदास्याचरणं तु तादृशनिर्द्धनब्राह्मणपरम् ॥

बृहस्पतिः—

वृत्तस्वाध्यायवान्स्तेयी बन्धनात्क्लिश्यते चिरम् ।

स्वामिने तद्धनं दाप्यः प्रायश्चित्तं स कार्यते ॥

याज्ञवल्क्यः-

अष्टापाद्यं च शूद्रस्य स्तेये भवति किल्बिषम् ।
षोडशास्य तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु ॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत् ।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥

तद्दोषगुणविदिति सर्वत्रान्वितम् । तेन यत्र स्तेये यो दण्ड उक्तः स स्तेयदोषगुणज्ञस्य शूद्रस्याऽष्टगुणः तादृशवैश्यस्य षोडशगुणस्तादृशक्षत्रियस्य द्वात्रिंशद्गुणस्तादृशब्राह्मणस्य चतुःषष्टिगुणः ततोप्याधिकगुणब्राह्मणस्य शतगुणः ततोप्यधिकतरगुणस्य ब्राह्मणस्याऽष्टाविंशत्यधिकशतगुण इत्यर्थः ।

## अथ स्तेनातिदेशः ।

तत्र मनुः-

योदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।
याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥

तथा-

अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य हन्याच्चौरानिवेश्वरः ॥

अग्निरत्र चौर्यानुकूलः । भक्तं चौरभक्ष्यम् । शस्त्रं चौर्याङ्गम् । अवकाशः चौरावस्थानम् । सन्निधातॄन् चौरचोरयितव्ययोः सन्निधापकान् ।

याज्ञवल्क्यः—

भक्ताऽवकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।
कृत्वा चौरस्य हन्तुर्वा जानतो दण्ड उत्तमः ॥

अग्निरुदकं च चौर्योपष्टम्भकम् । मंत्रं चौर्योपायोपदेशः।उपकरणं चौर्यसाधनं खनित्रादि । व्ययोऽपहर्त्तुर्गच्छतःपाथेयम्।जानतश्चौरं ज्ञात्वा एवं करणे उत्तमदण्डः । हन्तुरप्येवं कुर्वतामीदृशो दण्डः ।

नारदः—

भक्तावकाशदातारः स्तेनानां च प्रसर्पताम् ।
शक्ताश्च य उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥

ये भक्ताद्यन्यतमं चौराय ददति ये वा धारणक्षमा अपि चौरं जहति तेऽपि चौरवद्दण्ड्याः ।

आह्वापकादेशकरास्तथा चान्तरदायकाः ।
समदण्डाः स्मृताः सर्वे ये च प्रच्छादयन्ति तान् ॥

ये चौरान् आकारयन्ति आदिशन्ति स्थाने स्थापयन्ति वा धनिकाऽनुसृतान् गोपयन्ति वा तेऽपि चौरसमाः।

कात्यायनः—

क्रेतारश्चौरभाण्डानां प्रतिग्राहिण एव च ।
समदण्डाःस्मृता ह्येते ये च प्रच्छादयन्ति तान् ॥

चोरितद्रव्याणां तथा ज्ञातानां क्रेता ग्रहीता सङ्क्षेप्ता च चौरसमदण्ड्य इत्यर्थः ।

हन्यादित्यनुवृत्तौ विष्णुः–

प्रसह्य तस्कराणामवकाशभक्तप्रदांश्चाऽन्यत्र राजाऽशक्तेः ।

राजा चेच्चौरनिराकरणाऽक्षमः तदा चौराय स्वरक्षणार्थं भक्तादिदानेऽपि न दोष इत्यर्थः ।

मनुः–

राष्ट्रेषु रक्षाधिकृतान्सामन्तांश्चैव देशितान् ।
अभ्यागतेषु मध्यस्थाञ्छिष्याच्चौरमविद्रुतम् ॥

देशावेक्षकस्तादृश एव सामन्तोप्यवेक्षायामुदासीनो भवंश्चौरवद्दण्ड्य इत्यर्थः ।

तथा–

ग्रामघातेहिताभङ्गे पथि मोषाऽभिदर्शने ।
शक्तितोऽनभिधावन्तो निर्वास्याः सपरिच्छदाः ॥

ग्रामघाते ग्रामोपद्रवे ईहिताभङ्गे ईहितस्य कृतस्य सस्योत्पत्त्यनुकूलबन्धस्य विदारणे चोरितद्रव्यस्य चौरहस्तस्थस्याऽध्वनि दर्शने यथाशक्ति तत्प्रतीकारमकुर्वाणोऽनियुक्तोपि सधनो देशान्निःसार्यः ॥

## अथ चौराऽपवादः ।

मनुः–

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥

क्षीणवृत्तिः पाथेयशून्यः ।

वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च ॥

तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ।

फलानि अन्याऽपरिगृहीतानि ॥

"फलानि चाऽगृहीतानि" इति गोतमवचनात् । तथा होमाग्निसन्दीपनाय परेन्धनं गोग्रासार्थं परतृणं ग्राह्यम् ।

राजकृत्ये आपस्तम्बः—

ग्रामेषु नगरेषु चार्याञ्छुचीन्सत्यशीलान्प्रजागुप्तये निदध्यात् । तेषां पुरुषा एव तथागुणाः स्युः । सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यं क्रोशो ग्रामेभ्यः । ग्रामनगरयो रक्षकाः ससहायाः साधवः कार्याः। तैश्च नगरात्परितो भूमौ योजनमितायां नगरे च यच्चौरैरपहृतं तद्देयम् ।

एवं ग्रामरक्षकेण ग्रामक्रोशमिते तत्परिसरेपीत्यर्थः ।

कात्यायनः—

गृहेषु मुषितं राजा चौरग्राहांश्च दापयेत् ।

आरक्षकांस्तु दिक्पालान्यदि चौरो न लभ्यते ॥

गृहेष्वित्युपलक्षणम् । यदि चौरो ऽन्विष्यमाणो न लभ्यते तदा तदनुसन्धायकद्वारा वा देशपतिद्वारा वा चोरितं धनं राजा दापयेदित्यर्थः । आरक्षकः कोटवार इति प्रसिद्धः । देशपतिस्तद्देशरक्षाधिकृतः ।

कात्यायनः–

ग्रामान्तेषु हृतं द्रव्यं ग्रामाध्यक्षं प्रदापयेत् ।
विवीते स्वामिना देयं चौरोद्धर्त्रा विवीतके ॥

विवीतेऽरण्ये । स्वामिना राज्ञा चौरोद्धर्त्रा चौराश्रयभूतेनाविवीते क्षेत्रादौ ।

तथा–

स्वदेशे यस्य यत्किञ्चिद्धृतं देयं नृपेण तत् ।
गृह्णीयात्तत्स्वयं नष्टं प्राप्तमन्विष्य पार्थिवः ॥
चौरैर्हृतं प्रयत्नेन स्वरूपं प्रतिदापयेत् ।
तदभावे तु मूल्यं स्यादन्यथा किल्बिषी नरः ॥

स्वरूपं तदेव वस्तु ।

वृद्धमनुः–

यस्मादपहृताल्लब्धं द्रव्यात्स्वल्पं तु स्वामिना ।
तच्छेषमाप्नुयात्तस्मात्प्रत्यये स्वामिना कृते ॥

मुषितद्रव्यादल्पं स्वामिना यस्मात्पुरुषाल्लब्धं तच्छेषमपि स्वामी तत एव प्राप्नुयात् । किन्तु स्वामिना शेषांशे चौरविमते चौर्यगतत्वे शपथे कृते सतीत्यर्थः । यदि तु चौरत्वाभिमतस्य शेषापहारे प्रमाणं नास्ति तदा उक्ता व्यवस्थेति द्रष्टव्यम् ।

याज्ञवल्क्यः–

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥

शौल्किको रक्षाधिकारी। स्थानपालो देशपतिः। अनास्थायां वाकारः।, नष्टमनवधानगतम्। अपहृतं चौरेण। तेनाऽयमर्थः। नष्टमपहृतं वा वस्तु केनाऽपि तदस्वामिना समानीतं राज्ञा वर्षपर्यन्तं धारयितव्यम्। तदभ्यन्तरे स्वामी चेदायाति तदा स एव। नो चेद्वर्षोपरि तद्देशराजस्तद्गृह्णीयादिति।

मनुः—

प्रणष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम्।
यांस्तत्र चौरान्गृह्णीयात्तान्राजेभेन घातयेत्॥

तत्र राजपुरुषै रक्ष्यमाणे तद्धने इभेन हस्तिना।

---

## अथ साहसप्रकरणम्॥ १४॥

तत्र नारदः—

सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते॥

तथा—

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र कीर्त्यते।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु।

रक्षितुर्ज्ञाने सत्येव बलेन आधिर्यत्पीडनं तत्स्तेयमित्यर्थः।

तद्विभजते स एव—

फलमूलोदकादीनां क्षेत्रोपकरणस्य च।

भङ्गाक्षेपापमर्दाद्यैः परदारप्रधर्षणम् ॥
प्राणोपरोधि यच्चाद्यमध्यमोत्तमसाहसम् ।

तत्राद्ये मनुः—

क्षेत्रोपकरणं सेतुं पुष्पमूलफलानि च ।
विनाशयन्हरन्दण्ड्यः शताद्यमनुरूपतः ॥
पशुवस्त्रान्नपानानि गृहोपकरणं तथा ।
हिंसयंश्चोरयन्दाप्यो द्विशताद्यदमं तथा ॥
स्त्रीपुंगोहेमरत्नानि देवविप्रधनं तथा ।
कौशेयं चोत्तमं द्रव्यमेषां मूल्यसमो दमः ॥
द्विगुणो वा कल्पनीयः पुरुषाऽपेक्षया नृपैः ।
हर्त्तारो घातनीयाः स्युः प्रसङ्गविनिवृत्तये ॥

क्षेत्रोपकरणं हलादि । गृहोपकरणं शिलापट्टादि । शताद्यं शतावरम् ।

नारदः—

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशताऽवरः ॥
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥
स्यातां संव्यवहार्यौ द्वौ धृतदण्डौ तु पूर्वयोः ।
धृतदण्डोप्यसंभाष्यो ज्ञेय उत्तमसाहसे ॥

तदयं संक्षेपः । अल्पस्य धनस्य हरणे विनाशने

वा शताद्यो दण्डः । क्षेत्रसेत्वादेस्तु चौर्येण साहसेन वा विनाशने विनाशितसमं धनं चौरः साहसी वा धनस्वामिनि दाप्यः।हीनपुरुषस्तु द्विगुणं दण्ड्यः। उत्तमसाहसी तु दण्डेन विशोधितोऽपि न व्यवहारादिरूपसम्बन्धवान्कार्य इति।

मनुः—

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोपि वा ।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम् ॥

याज्ञवल्क्यः—

सामान्यप्राभवद्रव्यहरणात्साहसं स्मृतम् ।
तन्मूल्याद्द्विगुणो दण्डो निह्नवे च चतुर्गुणः ॥

सामान्यप्राभवं सामान्यप्रभुत्वविषयः । परस्वमिति यावत् ।

तथा—

अभिघाते तथा भेदे च्छेदे कुड्यावघातने ।
पणा दाप्यः पञ्चदश विंशतिं तद्द्वयं तथा ॥

परकीयकुड्याभिघाते शिथिलीकरणे पञ्चदश पणाः । भेदे बन्धशिथिलीकरणे विंशतिं, च्छेदे द्विधाकरणे तथा विमर्दे अवघातने उभयत्रापि चत्वारिंशत्पणदण्डः। तत्सञ्जीकरणं च"स तस्योत्पादयेत्तुष्टिम्" इति मनुवचनात् ।

चर्मचार्मिकभाण्डेषु काष्ठलोष्टमयेऽपि च ।
मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेपि च ॥

चार्मिकमुपानदादि । प्रथमचर्मपदं स्पष्टार्थम् । काष्ठमयं तण्डुलादिमापनम् । लोष्टमयं घटादि । एषु सहसाविनाशितेषु "मूल्यपञ्चगुणो दण्डः पुष्पमूलफले-पि च" । यस्तु पुष्पादौ शतावरो दण्डो मनूक्तः सोपि प्रशस्तपुष्पादिपरः । स्वामितोषस्तु सर्वत्र ।

कात्यायनः–

क्षतं भङ्गोऽवमर्दौ वा कुर्याद्द्रव्येषु यो नरः ।
प्राप्नुयात्साहसं पूर्वं द्रव्यभाक्स्वाम्युदाहृतः ॥

क्षतं किञ्चिन्नाशः। भङ्गोर्द्धनाशः। अवमर्दः सर्वनाशः। द्रव्यमिह स्फटिकादि। द्रव्यभाक् । स्वामिने च स्फाटि-कादि देयमित्यर्थः ।

याज्ञवल्क्यः–

दुःखोत्पादि गृहे द्रव्यं क्षिपन्प्राणहरं तथा ।
षोडशाद्यः पणान्दण्ड्यो द्वितीये मध्यमं दमम् ॥

दुःखोत्पादि कण्टकादि । प्राणहरं सर्पादि । परगृहे क्षिपन् आद्यःषोडशपणान्, द्वितीये मध्यमसाहसं दण्ड्य इत्यर्थः ।

विष्णुः–

गृहकुड्यादिभेत्ता मध्यमसाहसं तच्च योजयेत् ।
परगृहे भित्त्यादेरभिदारको मध्यमसाहसं राज्ञा

दडयः। स्वभग्नं च भित्त्यादिकं स पूर्ववत्कुर्यादित्यर्थः।

तथा–

गृहपीडाकरं द्रव्यं प्रक्षिपन् पणशतम्।
पीडा चोत्कटाभिमता।

याज्ञवल्क्यः–

अर्घ्याक्रोशाऽतिक्रमकृद्भ्रातृभार्याप्रहारकः।
सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकः॥
सामन्तकुलिकादीनामाकारस्याप्रकारकः।
पञ्चाशत्पणिको दण्ड एषामिति विनिर्णयः॥
स्वच्छन्दविधवागामी विक्रुष्टेऽनभिधायकः।
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान्स्पृशन्॥
शूद्रप्रव्रजितानां च दैवे पैत्र्ये च भोजकः।
अयुक्तशपथं कुर्वन्नयोग्यो योग्यकर्म्मकृत्॥
वृक्षक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत्।
साधारणस्यापलापी दासीगर्भविनाशकः॥
पितापुत्रसुहृद्भ्रातृदम्पत्याचार्यशिष्यकाः।
एषामपतितानां च त्यागी च शतदण्डभाक्॥

अर्घ्य आचार्यादिः। तस्याक्रोशमतिक्रमं वा यः करोति। प्रहारस्ताडनम्। सन्दिष्टं प्रस्थापितम्। स-मुद्रं मुद्रासहितं गृहम्। सामन्ताः प्रतिवेशिनः। कुलि-काः सकुल्याः। मङ्गल्यादावेतेषामनाह्वायकः। एते

पञ्चाशतं पणान्दण्ड्याः । स्वच्छन्देति । अनियुक्तः सन्विधवाभिगन्ता । अयन्त्वनियोगहेतुको दण्डः । व्यभिचारहेतुकस्त्वन्य एव । विक्रुष्टे चौराद्याक्रान्तैराह्वाने कृते अनभिधायकः प्रतिवचनादाता । अयुक्तशपथं मातरमभिगच्छामीत्यादिरूपम् । अयोग्यः अक्षमः । योग्यकर्म योगादि । तेन यो यत्कर्म कर्त्तुं न शक्नोति स चेत्कर्त्तुं प्रवर्त्तते तदा दण्ड्यः । वृक्षस्य पुंस्त्वं फलार्जनम् । औषधादिना तदुपघाती । साधारणेति । अन्यसाधारणं धनमसाधारणीकृत्य गृह्णन्पितापुत्रयोः सुहृदोर्भ्रात्रोर्दम्पत्योराचार्यशिष्ययोर्मध्ये त्यागबीजदुष्कर्माऽभावे अन्योन्यत्यागी । एतेषां पणशतं प्रत्येकं दण्डः ।

मनुः–

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ।
त्यजन्नपतितानेतान्राज्ञो दण्ड्यः शतानि षट् ॥

स्त्री भार्या । त्यागो विहितभरणपोषणाद्यकरणम् ।

एतानेव प्रकृत्य शङ्खः–

पुत्रादीन्यस्त्यजेत्कामात्सद्विशतं दण्डं प्राप्नुयात् ।

तत्र याज्ञवल्क्योक्तो दण्डोऽविदुषोरन्योन्यत्यागे । मनूक्तस्त्वविदुषैव कामादेकतरस्य विदुषस्त्यागे । शङ्खोक्तस्तु कामादविदुषैकतरत्यागे इति सम्प्रदायः । एवं विदुषोरन्योन्यत्यागेषूह्यम् ।

शङ्खः—

मातापित्रोर्गुरोश्चातिक्रमेऽङ्गच्छेदः।

येनाङ्गेन ताडयेत्तच्छेद इत्यर्थः।

विष्णुः—

अभक्ष्येण ब्राह्मणं दूषयित्वा षोडश सुवर्णाञ्जात्यपहारिणा शतं सुरया वध्यः।क्षत्रियं दूषयित्वा तदर्द्धं, वैश्यं दूषयित्वा तदर्द्धम्।

अभक्ष्यं विष्ठादि। जात्यपहारि लशुनादि। सुरा प्रसिद्धैव। तदर्द्धमित्यनयोरव्यवहितस्तत्पदार्थः। इदमुत्कृष्टब्राह्मणादिविषयम्।

याज्ञवल्क्यः—

द्विजं प्रदूष्याभक्ष्येण दण्ड उत्तमसाहसः।

क्षत्रियं मध्यमो वैश्यं प्रथमः शूद्रमर्द्धकम्॥

शूद्रस्याभक्ष्यं कपिलादुग्धादि। अर्द्धकं पणानां सपादं शतम्। इदमनुत्कृष्टब्राह्मणादिपरम्।

मनुः—

अभक्ष्यमथवा पेयं वैश्यादीन्प्राशयन्द्विजान्।

जघन्यमध्यमोत्कृष्टान्दण्डानाहुर्यथाक्रमम्॥

पणाः शूद्रे भवेद्दण्डश्चतुःपञ्चाशदेव तु।

इदमत्यन्ताधमशूद्रविषयम्। अन्यद्याज्ञवल्क्यविषयकम्।

विष्णुः–

जातिभ्रंशकरस्याभक्षस्य भक्षयिता विवास्यः ।

स्वयं लशुनादिभोक्ता ब्राह्मणो देशाद्बहिः कार्य इत्यर्थः ।

याज्ञवल्क्यः–

जारं चौरेत्यभिवदन्दाप्यः पञ्चशतं दमम् ।
उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥

कुलाऽकीर्त्तिभयाच्च रूपतो जारं चौरत्वेन निर्दिश्य जारापह्नवं कुर्वन् पणानां पञ्चशती उत्कोचामादाय तु तं त्यजन्पणानां पञ्चशती अष्टगुणा दण्ड इत्यर्थः। उत्कोचामष्टगुणामित्यन्ये ।

तथा–

मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।
राजयानाऽऽसनारोढुर्दण्डो मध्यमसाहसः ॥

मृताङ्गलग्नं मृतककम्बलादि । तत्तथात्वेनाप्रकाश्य विक्रेतुः । राजयानाद्याऽऽरोहणं राजाज्ञां विनेत्यर्थः ।

मनुः–

अभिचारेषु सर्वेषु कर्त्तव्यो द्विशतो दमः ।
मूलकर्मणि चाऽनाप्ते कृत्यासु विविधासु च ॥
अदूषितानां द्रव्याणां दूषणे भेदने तथा ।
मणीनामपवेधे तु दण्डः प्रथमसाहसः ॥

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः।
तं राजा निर्द्धनं कृत्वा क्षिप्रमेव प्रवासयेत्॥

अभिचारेति। अनपराधिनं प्रति श्येनादिकर्त्तुः। भैषज्यकर्म चानाप्ततया कुर्वतः स्वाऽयोग्यामुच्चाटनादिरूपां च कृत्यां कुर्वतो द्विशतो दमः। यः सद्द्रव्यमसद्द्रव्यमेलनेन मन्दीकरोति। भेदनानर्हमण्यादि भिनत्ति वा भेदनार्हमपि मुक्तादि मन्दप्रदेशे विध्यति। तस्य तस्य सार्द्धद्विशतरूपो दमः। यस्तु शूद्रादिः क्षत्रियाऽऽदिचर्यया जीवति तस्य सर्वस्वहरणविवासने दमः।

याज्ञवल्क्यः—

विप्रत्वेन तु शूद्रस्य जीवतोऽष्टशतो दमः।

विप्रलिङ्गधारणेन जीविकां कुर्वतः।

मनुः—

सङ्क्रमध्वजयष्टीनां प्रतिमानां च भेदकः।
प्रतिकुर्याच्च तत्सर्वं दद्यात्पञ्चशतानि च॥

संक्रमः शाक इति प्रसिद्धः। ध्वजो देवस्य गरुडध्वजादिः। यष्टिर्हट्टादिचिह्नभूता। प्रतिमा देवस्य। एतदन्यतमस्य यो विनाशं करोति स पञ्चशतानि दण्ड्यः।

कात्यायनः—

हरेद्भिन्द्याद्दहेद्वापि देवानां प्रतिमां यदि।

तद्गृहं चैव यो भिन्द्यात्प्राप्नुयात्पूर्वसाहसम् ॥

विष्णुः—

अभक्ष्यस्याऽविक्रय्यस्य च विक्रयी देवप्रतिमाभेदकश्चोत्तमसाहसं दण्ड्यः ।

अत्र प्रतिमोत्कर्षाऽपकर्षाभ्यां तद्धनोत्कर्षापकर्षाभ्यां वा दण्डविकल्पः ।

शङ्खः—

आरामप्रतिमाकूपसंक्रमध्वजसेतुनिपानभङ्गेषु तत्समुत्थानप्रतिसंस्कारोऽष्टशतं च ।

निपानं कूपादिसमीपे पशुजलपानस्थानम् । तत एतेषां सप्तानामन्यतमभङ्गे कृते तत्कर्त्रा आरामादेरभङ्गावस्थासमीकरणं कार्यम् । पणानामष्टशती च तस्य दण्ड इत्यर्थः ।

हन्यादित्यनुवृत्तौ विष्णुः—

सेतुभेदकृतः ।

इदं तु महासेतुविषयम् ।

शारीरोऽङ्गच्छेद इत्यनुवृत्तौ ।

शङ्खः—

वापीकूपतडागोदपानभेदमार्गरसद्रव्यदूषणे अदासीदाससम्प्रदानकरणे च ।

मार्गस्य तीक्ष्णशलाकादिना । रसद्रव्यस्य विषा-

दिना। अदास्या दासाय दानेन दूषणे दुष्टीकरणे तत्कर्त्तुः प्रमापणमङ्गच्छेदो वा।

याज्ञवल्क्यः—

विषाग्निदां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम्।
सेतुभेदकरीं चाप्सु शिलां बद्धा प्रवेशयेत्॥

विषदा अग्निदा पुरुषघ्नी सेतुभेत्त्री वा स्त्री अगर्भा चेत् तदा शिलां बद्ध्वा अप्सु प्रवेशयेदित्यर्थः।

तथा—

विप्रदुष्टां पतिगुरुनिजाऽपत्यप्रमापणीम्।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत्॥

विशेषतः प्रकर्षेण च दोषवतीं तथा पत्युः पित्रादेः अपत्यस्य वा मारणकर्त्रीं कर्णकरनासिकौष्ठच्छेदनपूर्वकं गोद्वारा मारयेत्॥

तथा—

क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाऽग्निना॥

क्षेत्रादीनां षण्णामन्यतमस्याऽपिदाहको भूपभार्याऽभिगामी वा वीरणाग्निना दाहयितव्यः।

मनुः—

प्राकारस्य च च्छेत्तारं परिखानां च पूरकम्।
द्वाराणां चैव भेत्तारं क्षिप्रमेव प्रमापयेत्॥

नगराद्याश्रयमत्स्यपरिखाया द्वारस्य नाशकं त्वरया मारयेत् ॥

राजकोशापहन्तॄंश्च प्रतिकूलेष्ववस्थितान् ।
घातयेद्विविधैर्दण्डैररीणां चोपजापकान् ॥

याज्ञवल्क्यः–

सुवर्णशतमेकं तु वधार्हो दण्डमर्हति ।
अङ्गच्छेदे तदर्द्धं तु विवासे पञ्चविंशतिम् ॥

वधार्हे अपराधे प्रसक्तवधो ब्राह्मणः शतं सुवर्णान्दण्ड्यः । एवमग्रेपि ।

तथा–

ये कार्यिभ्योऽर्थमेवं हि गृह्णीयुः पापचेतसः ।
तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम् ॥
विनियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम् ।
धनोष्मणा पच्यमानान्निःस्वांस्तान्कारयेन्नृपः ॥

कार्यिभ्यो व्यवहारिभ्यः । कार्यिणामर्थिप्रत्यर्थिनाम् ।

याज्ञवल्क्यः–

ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून्संमानयेद्राजा विपरीतांस्तु घातयेत् ॥
उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।
सदानमानसत्काराञ्छ्रोत्रियान्वासयेत्तदा ॥

तथा–

अबध्यं यश्च बध्नाति बध्यं यश्च विमुञ्चति ।

अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥

योऽधिकृतः अवध्यं निरपराधत्वेन निर्णीतं वध्नाति वध्यं सापराधत्वेन निर्णीतं त्यजति वा अपराधित्वेन निरपराधित्वेन वा निर्णीतं वध्नाति त्यजति वा स सहस्रं पणान्दण्ड्यः ।

विष्णुः—

दण्ड्यानुन्मोचयन्दण्डाद्द्विगुणं दण्डमावहेत् ।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥

दण्डाधिकारी दण्ड्यानुन्मोचयन् । अदण्डयन् अदण्ड्यान् दण्डयित्वा तद्दण्डात् द्विगुणं दण्ड्यः ।

कात्यायनः—

राजक्रीडासु ये शक्ता राजवृत्त्युपजीविनः ।
अप्रियस्य च वक्तारो वधं तेषां प्रकल्पयेत् ॥
प्रतिरूपस्य कर्त्तारः प्रेक्षकाः प्रकराश्च ये ।
राजार्थमोषकाश्चैव प्राप्नुयुर्विविधं वधम् ॥

ये राजाज्ञां विना राजवेशकारिणः । तथा स्वकर्त्तव्यराजकार्यविरोधेन नृत्यादिप्रेक्षकाः । तथा प्रकरा ये दण्डाख्यं राजकरं स्वभावतो निरतिशयं सातिशयीकृत्य गृह्णन्ति ये वा राजधनं चोरयन्ति ते सर्वे नानारूपैर्वधप्रकारैर्वध्याः ।

वध्या इत्यनुवृत्तौ विष्णुः–

ये चाऽकुलीना राज्यमभिकामयेयुः ।

अकुलीनाराज्ञो यत्कुलं तदप्रसूताः ।

याज्ञवल्क्यः–

न्यूनं वाप्यधिकं वापि लिखतो राजशासनम् ।

पारदारिकचौरान्वा मुञ्चतो दण्ड उत्तमः ॥

राजशासनमियद्देयमियद्ग्राह्यमित्यादिकम् ।

शङ्खः–

कूटशासनप्रयोगे राजशासनप्रतिषेधे कूटतुलामानव्यवहारे च शारीरोऽङ्गच्छेदो वा ।

शासनमाज्ञामकृतामपि कृतां कृत्वा प्रकाशयति राजाज्ञामतिक्रामति कूटया तुलया कूटेन वा मानेन प्रस्थादिना व्यवहरति तस्य मारणमङ्गच्छेदो वा । अपराधोत्कर्षापकर्षाभ्यामयं विकल्पः ।

अपराधस्यात्यपकर्षे कात्यायनः–

प्रमाणेन तु कूटेन मुद्रया वापि कूटया ।

कार्यं तु साधयेद्यो वै स दाप्यो दण्डमुत्तमम् ॥

उत्तमं पणसहस्ररूपम् ।

मनुः–

कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ।

बालस्त्रीब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा ॥

शासनमिह राजादेशः। प्रकृतिरमात्यः। दूषकानविद्यमानदोषवादिनः। द्विट्सेविनो राजविरोधिसेवकान्। एतान्राजा हन्यात्।

विष्णुः—

स्वाम्यमात्यसुहृत्कोशदण्डराष्ट्रदुर्गाणि प्रकृतयः। तद्दूषकान् हन्यात्।

दण्डोऽत्र सेना। एतत्सप्ताङ्गकं राज्यम्। एषामङ्गानामेकतमस्यापि दूषको वध्यः।

याज्ञवल्क्यः—

शस्त्रावघाते गर्भस्य पातने चोत्तमो दमः।
उत्तमो वाऽधमो वापि पुरुषस्त्रीप्रमापणे॥

परदेहे शस्त्रपातनमात्रे तथा ब्राह्मणीतरगर्भपातने पणसहस्रं दण्डः।

उत्तमो अधमो वेति मध्यगतोत्कर्षापकर्षाभ्यां विकल्पोऽत्र।

उशना—

परिक्लेशेन पूर्वः स्याद्भेषजेन तु मध्यमः।
प्रहारेण तु गर्भस्य पातने दण्ड उत्तमः॥

परिक्लेशेन परिश्रमजननेन, भेषजेन भेषजप्रयोगेण, प्रहारेण गर्भपातने प्रथममध्यमोत्तमसाहसानि यथाक्रमं दण्डः।

साहसं पञ्चधा प्रोक्तं वधस्तत्राधिकः स्मृतः।

तत्कारिणो नार्थदमैः शास्या वध्याः प्रयत्नतः ॥

तत्कारिणो वधकारिणः।

वधेपि विशेषमाह स एव–

प्रकाशवधका ये तु तथा चोपांशुघातकाः ॥
राज्ञा सम्यग्वधं हित्वा हन्तव्या विविधैर्वधैः ॥

सम्यग्वधः सकृदेव शिरश्छेदः। विविधोङ्गशास्तिपूर्विका प्राणशास्तिः।

कात्यायनोपि–

व्यापादने तु तत्कारी वधं चित्रमवाप्नुयात्।

तथा–

मित्रप्राप्त्यर्थलोभैर्वा राज्ञा लोकहितैषिणा।
न मोक्तव्याः साहसिकाः सर्वभूतभयावहाः ॥
लोभाद्भयाद्वा यो राजा न हन्यात्पापकारिणः।
तस्य प्रभ्रश्यते राष्ट्रं राज्याच्च परिहीयते ॥
बन्धाग्निविषशस्त्रेण परान्यस्तु प्रमापयेत्।
क्रोधादिना निमित्तेन नरः साहसिकस्तु सः ॥

बौधायनः–

क्षत्रियादीनां ब्राह्मणवधे वधः। सर्वस्वहरणं च तेषामेव। तुल्यापकृष्टवधे यथाबलमनुरूपं च दण्डं प्रकल्पयेत्।

क्षत्रियवधे गोसहस्रं वृषभाधिकं राज्ञ उत्सृजेत्। वैरि-

निर्यातनार्थं शतं वैश्ये दश शूद्रे वृषभश्चाधिकः। शूद्र-वधेन स्त्रीवधो गोवधश्च व्याख्यातोऽन्यत्राऽऽत्रेय्याः। धेन्वनडुहोश्चान्ते चान्द्रायणं चरेत्। आत्रेय्या वधः क्षत्रियवधेन व्याख्यातोऽतोहंसभासबर्हिचक्रवाकबलाकाकाकोलूकमण्डूकनकुलभेरीकबभ्रुनकुलादीनां वधः शूद्रवत्। क्षत्रियादीनां त्रयाणामपि ब्राह्मणवधे सर्वस्वहरणं वधश्च। तेषामेव क्षत्रियादीनामेव। तुल्यः सजातीयः। अपकृष्टो हीनजातीयः। यथाबलं यथाशक्ति। अनुरूपं धनरूपमुत्तमसाहसादिकम्। चकाराच्छारीरं दण्डं प्रकल्पयेत्।

क्षत्रियेति। ब्राह्मणस्य तु क्षत्रियवधे सवृषं गोसहस्रम्। ब्राह्मणस्य वैश्यवधे सवृषं गोशतम्। शूद्रवधे सवृषं गोदशकम्। शूद्रवधेनेति रजस्वलान्यस्त्रीवधे धेन्वनडुहान्यगोवधे च शूद्रवधवद्दण्डः। आत्रेयी रजस्वला तस्यास्तु वधे क्षत्रियवधवद्दण्डः। भेरीकः छुच्छुन्दरीतिप्रसिद्धः। बभ्रूः स्थूलनकुलः। नकुलो जलनकुलः। आदिपदेनापरास्तिर्यञ्चः।

बृहस्पतिः—

एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः।
मर्मप्रहारदो यश्च घातकः स उदाहृतः॥
मर्मघाती तु यस्तेषां यथोक्तं दापयेद्दमम्।

आरम्भकृत्सहायाश्च दोषभाजस्तदर्द्धतः ॥
क्षतस्याऽल्पमहत्त्वं च मर्मस्थानं च यत्नतः ।
सामर्थ्यं चाऽनुबन्धं च ज्ञात्वा चिह्नैः प्रकाशयेत्॥

यो घातकदण्ड उक्तः स इह मर्मघातिन एवाऽऽरम्भकृतः । सहकारिणश्च प्रत्येकं तदर्द्धरूपः । मर्मघातित्वनिश्चयार्थं क्षतस्येत्यादि । तथा च क्षतस्य अल्पत्वेन महत्त्वेन वा सामर्थ्येनाऽतिचारकत्वादिरूपेण अनुबन्धेनाऽपौनःपुन्येन मर्मघातकत्वमवसेयमित्यर्थः।

नारदः—

अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥
शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् ।
ललाटे चाऽभिशस्ताङ्कः प्रयाणं गर्दभेन तु ॥

साहसचौर्ययोर्यमः—

न शारीरो ब्राह्मणे वै दण्डो भवति कर्हिचित् ।
गुप्ते तु बन्धने बद्ध्वा राजा भक्तं प्रदापयेत् ॥
अथवा बन्धनं रज्ज्वा कर्म वा कारयेन्नृपः ।
मासार्द्धमासं कुर्वीत कार्यं विज्ञाय तत्वतः ॥
यथाऽपराधं विप्रं तु विकर्माण्यपि कारयेत् ।

याज्ञवल्क्यः—

यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाऽहं दाता कारयेत्स चतुर्गुणम् ॥

यश्चैवमिति । एतदभियोगेन यल्लगिष्यति तदहं दाता त्वं तावत्कुर्वित्युक्त्वा यः कारयति तस्य चतुर्गुणो दमः ।

कात्यायनः—

आरम्भकृत्सहायश्च तथा मार्गानुदेशकः ।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥
युद्धोपदेशकश्चैव तथा नाशप्रवर्त्तकः ।
उपेक्षाकार्ययुक्तश्च दोषवक्तानुमोदकः ॥
अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः ।
यथाशक्त्यनुरूपं तु दण्डमेषां प्रकल्पयेत् ॥

आरम्भेत्यादि । अपरमक्रियाचिकीर्षुं ज्ञात्वा यस्तदुद्यमं तत्साहाय्यं वा करोति तस्य तत्कर्माऽनुकूलकर्मोपदेशं वा करोति । अपकर्मिण आश्रयभूतो वा तदनुकूलशस्त्रदाता वा भोजनदाता वा कृताऽपकर्मणस्त्राणाय तस्मै युद्धोपदेशं वा करोति । अपकारिणि विषाद्यर्पणेन तं परनाशाय प्रवर्त्तयति साहसादिना जने पीडयमाने स्वयमक्षमोऽपि यः परद्वारा न प्रतिकरोति । अयुक्तो राज्ञाऽनियुक्तः सन्नियुक्तवत्पीडयति।दोषवक्ता पीडनीयस्य दोषवक्ता । अनुमोदकः पीडकस्याऽनुमन्ता । क्षमः सन्पीडकस्याप्रतिषेद्धा । एते त्रयोदशापि तदपराधकर्त्तार इव शक्त्यनुरूपं दण्ड्याः ।

नारदः–

अयुक्तं साहसं कृत्वा प्रत्यासत्तिं करोति यः।
ब्रूयात्स्वयं वा सदसि तस्यार्द्धविनयः स्मृतः॥

विनेतुः सहचरतां ब्रूयादिति स्वकृतमपराधं स्वयमेव प्रकाशयति।

तथा–

गूहमानस्तु दौःशील्यं यदि व्रातः स जीवति।
सभ्याश्चान्येन तुष्यन्ति तीव्रो दण्डस्तु पद्यते॥

स्वयं कृतमपकर्म विनेत्रादिना पृष्टः सन्नपह्नुवानोऽसौ ह्यपकर्मणैव जीविकां करोति तदा लघुन्यपकर्मणि तीव्रतरो दण्डस्तस्य कार्य इत्यर्थः।

## अथ घातकान्वेषणम्।

तत्र याज्ञवल्क्यः–

अविज्ञातहतस्याऽऽशु कलहं सुतबान्धवाः।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक्॥
स्त्रीद्रव्यवृत्तिकामो वा केन वायं गतः सह।
तत्प्रदेशसमासन्नं पृच्छेद्वापि जनं शनैः॥

तत्प्रदेशसमासन्नं हननप्रदेशसमीपस्थम्।

हतः सन्दृश्यते यत्र घातकश्च न दृश्यते।
पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा।
प्रतिवेश्यानुवेश्यौ च तस्य मित्राणि बान्धवाः॥

प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ।
विज्ञेयोऽसाधुसंसर्गचिह्नहोढेन वा नरः ॥
एषोदिता घातकानां तस्कराणां च भावना ।
गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ॥
शपथेन विशोद्धव्यः सर्ववादेष्वयं विधिः ।
तत्कार्यं हननरूपं न प्रपद्यते ।
पृष्टः सन्नानुमन्यते तत्र व्यासः—
ज्ञात्वा तु घातकं सम्यक्ससहायं सबान्धवम् ।
हन्याच्चित्रैर्वधोपायैरुद्वेगजनकैर्नृपः ॥
बृहस्पतिः—
दिव्यैर्विशुद्धो मोच्यः स्यादशुद्धो वधमर्हति ।
निग्रहाऽनुग्रहाद्राज्ञः कीर्तिर्द्धर्मश्च वर्द्धते ॥

निग्रहेति । असाधोर्निग्रहात्साधोश्चाऽनुग्रहाद्राज्ञः कीर्त्तिधर्मयोरुपचयो भवतीत्यर्थः ।

---

## अथ स्त्रीसंग्रहणम् ॥ १५ ॥

तत्र व्यासः—
संग्रहस्त्रिविधः प्रोक्तः प्रथमो मध्य उत्तमः ।
उक्तश्चेति स्वशास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥
अदेशकाले संभाषा अरण्ये च परस्त्रियाः ।
अपाङ्गप्रेक्षणं हास्यं पूर्वं संग्रहणं स्मृतम् ॥

बृहस्पतिः–

अपाङ्गप्रेक्षणं हास्यं दूतीसंप्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां प्रथमः सङ्ग्रहः स्मृतः ॥

नारदः–

परस्त्रिया सहाऽकाले अदेशे पुरुषस्य तु ।
स्थानसंभाषणाऽऽमोदास्त्रयः सङ्ग्रहणक्रमाः ॥
नदीनां सङ्गमे तीर्थे आरामेषु वनेषु च ।
स्त्रीपुंसौ यत्समीयातां तच्च संग्रहणं स्मृतम् ॥
दूतीसम्प्रेषणैर्वापि लेखसम्प्रेषणैरपि ।
अन्यैर्वापि व्यभीचारैराद्यं सङ्ग्रहणं स्मृतम् ॥

संग्रहणमिति सम्यग्गृह्यते तदनुरक्ततया प्रमीयते आशयो येन तत्संग्रहणम् । अनन्यथासिद्धपरस्त्रीसंलापादि तेन कर्मणा वचसा च परस्परमनुरक्तावनुमीयेते । अनन्यथासिद्धत्वबलादेवाज्ञतया ऋजुतया कार्यौत्कण्ठ्यादिना अन्यथाभिसन्धिना वा कृतः संलापादिर्न संग्रहणम् । एतत्परमेव मनुवचनमपि–

"भिक्षुका बन्दिनश्चैव दीक्षिताः कारवस्तथा ॥
सम्भाषणं गृहे स्त्रीभिः कुर्युरप्रतिवारिताः" इति।

अदेशेत्यादि । अदेशे निर्जनादौ अकाले रात्र्यादौ स्थानमवस्थितिः आमोदः परीहासः । तथा च येन व्यापारेणाऽत्यासङ्गं गतेन चित्तं स्खलितमनुमीयते तदाद्यं संग्रहणमिति वर्त्तुलार्थः ।

मध्यमे बृहस्पतिः—

प्रेषणं गन्धमाल्यानां फलमद्यान्नवाससाम् ।
संभाषणं च रहसि मध्यमं संग्रहं विदुः ॥
प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ।
प्रलोभनं चान्नपानैर्मध्यमः संग्रहः स्मृतः ॥

संभाषणमिति पूर्वापेक्षयाऽतिशयमभिमतम् । गन्धेत्यादि । अस्य द्रव्यव्ययरूपतया पूर्वापेक्षया अधिकत्वमिति भावः ।

उत्तमे बृहस्पतिः—

एकशय्यासनं क्रीडाचुम्बनालिङ्गनं तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥

व्यासः—

शय्यासने विविक्ते तु परस्परमपाश्रयः ।
केशाकेशिग्रहश्चैव ज्ञेय उत्तमसंग्रहः ॥
उपकारक्रियाकेलिः स्पर्शो भूषणवाससाम् ।
सहशय्यासनश्चैव सर्वं संग्रहणं स्मृतम् ॥
स्त्रियं स्पृशत्यदेशे यः स्पृष्टो चामर्षयेत या ।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥

उपकारक्रिया हिताचरणक्रिया । उपचारेति क्वचित्पाठः । तत्र ताम्बूलादिप्रेषणमर्थः । केलिर्नर्म । संग्रहणमुत्तममिति शेषः । अदेशे स्तनादौ ।

नारदः–

दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत् ।
पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम् ॥
पाणौ यश्चापि गृह्णीयाद्वेश्यां वस्त्रांचलेपि वा ।
तिष्ठतिष्ठेति वा ब्रूयात्सर्वं संग्रहणं स्मृतम् ॥

वेश्यामित्युपलक्षणम् । स्वदारव्यतिरिक्तायां स्त्रियामीदृशश्चेष्टस्य व्यवहारः संग्रहणमित्यर्थः ।

तत्र बृहस्पतिः–

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।
विनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥

एषु त्रिषु संग्रहणेषु यथाक्रमं प्रथममध्यमोत्तमसाहसा दण्डा अधिकधनस्य त्वधिकोपि दण्ड इत्यर्थः ।

मनुः–

परपत्न्या तु पुरुषः सम्भाषां योजयन्रहः ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ॥

यया सह पूर्वं यस्याऽभिशापोऽभूत् तया सह रहस्यपि औचितीवादादधिकमालापमात्रं कुर्वाणः पूर्वसाहसं दण्ड्य इत्यर्थः ।

तथा–

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।

न दोषं प्राप्नुयात्किञ्चिन्नहि तस्य व्यतिक्रमः ॥

अनाक्षारितस्य निमित्तवशादौचितीवादादधिकेऽप्यालापे न दोष इत्यर्थः ।

अनाक्षारितस्यापि निर्जने परस्त्रिया सह संलापो दोष एवेत्याह स एव—

परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये गृहेऽपि वा ।
नदीनां वापि सम्भेदे स संग्रहणमाप्नुयात् ॥

मनुः—

न संभाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत् ।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥

निषिद्धस्तस्याः पत्यादिना वारितः ।

याज्ञवल्क्यः—

स्त्रीनिषेधे शतं दण्ड्यो द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥

स्त्री चेन्निवारिता पुरुषेण सममालपति तदा शतं पणान्दण्ड्या । पुरुष एव चेन्निवारितः स्त्रिया सहाऽऽलपति तदा द्वे शते पणान्दण्ड्यः । उभावपि निवारितौ चेत्परस्परमालपतस्तदा द्वौ प्रत्येकं प्रथमसाहसं दण्ड्यावित्यर्थः ।

मनुः—

किंचिदेव हि दाप्यः स्यात्सम्भाषां ताभिराचरन् ।

प्रेष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥

एकपुरुषाश्रितया स्वप्रेष्यया तापस्या वा रहसि सहाऽऽलपन्किञ्चिदेव सुवर्णतो न्यूनं दमं दाप्य इत्यर्थः।

विष्णुः—

येन येनाङ्गेनापराधं कुर्यात्तत्तस्य च्छेत्तव्यमष्टसहस्रं वा दण्डोऽन्यत्र ब्राह्मणाददण्ड्यो हि ब्राह्मणः।

शारीरदण्डाऽनर्हो ब्राह्मण इत्यर्थः।

मनुः—

परदाराभिमर्शे तु प्रवृत्तांस्त्रीन्महीपतिः।
उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥

त्रीन्ब्राह्मणेतरान्। उद्वेजनकरैः कर्णनासिकादिच्छेदरूपैः।

प्रतिलोमसंग्रहे तु स एव—

अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ॥

मात्स्ये—

यस्तु सञ्चारकस्तत्र पुरुषः स तथा भवेत्।
पारदारिकवद्दण्ड्यो यश्च स्यादवकाशदः ॥

सञ्चारकोऽभिसारयिताऽवकाशदो अभिसारस्थानदाता।

अनियतभर्त्तृकायास्तु संग्रहणे दण्डो नायमित्याह मनुः—

नैष चारणदारेषु विधिर्नात्मोपजीविषु।

सञ्जयन्ति हि ते नारीं निगूढाश्चारयन्ति च ॥

चारणो नटः । "भार्या पुत्रः स्विकातनुः" इत्यादिस्मरणादिह आत्मा भार्या तेनात्मानं भार्यां जीवनार्थमुपजीवतीति आत्मोपजीवी शैलूषादिः । एतौ हि स्वां स्त्रियमप्यलङ्कृत्य व्यभिचारयत इत्यतो नैतत्संग्रहे दण्डः । अभिगमदण्डस्त्वत्रापि स तु बन्धक्यभिगमप्रकरणे वक्ष्यते ।

नारदः—

नाथवत्या परगृहे संयुक्तस्य स्त्रिया सह ।
दुष्टं संग्रहणं तज्ज्ञैर्नागतायाः स्वयं गृहे ॥

नाथवत्यास्तावत्संग्रहणं दुष्टं दण्डयताबीजं यदि सैव संग्रहीतुर्गृहं स्वेच्छया समागत्य संग्राहयति तदा तदपि न दुष्टमित्यर्थः ॥

विष्णुः—

अदुष्टत्यक्तदारस्य क्लीबस्याप्यक्षमस्य च ।
स्वेच्छानुपेयुषो दारान्न दोषः साहसे भवेत् ॥

परित्यक्तान्क्लीबपतिकानक्षमपतिकान्वा परदारान्स्वेच्छांस्तद्गृहेऽपि सङ्गच्छतो अभिगच्छतो वा न दण्ड इत्यर्थः ।

## अथाभिगमदण्डः ।

तत्र मनुः—

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।

सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥

अनिच्छन्तीं कन्यामभिगच्छन् तत्सवर्णो वध्यो न त्विच्छन्तीमपीत्यर्थः ।

उत्तमां भजमानस्तु जघन्यो वधमर्हति ।

शुल्कं दद्यात्सेवमानः सम इच्छेत्पिता यदि ॥

उत्कृष्टवर्णां कन्यामिच्छन्तीमनिच्छन्तीं वा अधमवर्णोऽभिगच्छन् वध्यः । तस्यास्तत्पितुश्चेच्छया तामभिगच्छंस्तत्सवर्णः शुल्कं तत्पित्रे दाप्यः । किन्तु सा दत्तशुल्का तेनैव विवाह्येति ।

तदाह नारदः–

सकामायां तु कन्यायां सवर्णे नास्त्यतिक्रमः ।

किन्त्वलङ्कृत्य सत्कृत्य स एवैनां समुद्वहेत् ॥

शङ्खः–

समां शुल्कमाभरणं द्विगुणं स्त्रीधनं च दत्वा प्रतिपद्यते ।

समां कन्यां स्वयं रमितां शुल्काऽऽभरणस्त्रीधनानि द्विगुणानि दत्वा रन्ता विवाहयेदित्यर्थः ।

अभिसह्य तु यः कन्यां कुर्याद्दर्पेण मानवः ॥

तस्याशु कर्तेदङ्गुल्यौ दण्डं चार्हति षट्शतम् ।

सवर्णामनिच्छन्तीं कन्यां योनावंगुलिप्रक्षेपेण यो मैथुनवतीं कुर्यात्तस्याङ्गुलिद्वयच्छेदः । पणषट्शतं दण्डश्चेत्यर्थः ।

सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात् ।
द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥

सकामामिच्छन्तीं दूषयन्योनावङ्गुलिप्रक्षेपेण रमयंस्तुल्यः सवर्णः ।

नारदः—

कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत् ।
जघन्यं सेवमानां तु संयतां वासयेद्गृहे ॥
कन्यैव कन्यां या कुर्यात्तस्याः स्याद्विशतो दमः ।
शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश ॥

कुर्यात्तद्योनावङ्गुलिप्रक्षेपेण दूषयेत्। शिफा जटारज्ज्वादिप्रहारान् ।

या तु कन्यां प्रकुर्यात्स्त्री सा सद्यो मौण्ड्यमर्हति ।
अङ्गुल्यो रचयेच्छेदं खरेणोद्वहनं तथा ॥

या पुनः स्त्री कन्यां तद्योनावङ्गुलिप्रक्षेपेण दूषयेत् सा तत्क्षणादेव शिरोमुण्डनं तदभ्यासेऽङ्गुल्योश्छेदं गर्दभेन राजमार्गगमनमर्हतीत्यर्थः ।

याज्ञवल्क्यः—

अलङ्कृतां हरन्कन्यामुत्तमं ह्यन्यथाधमम् ।
दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥
सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ।
दूषणे तु करच्छेदस्तूत्तमायां वधस्तथा ॥

अलङ्कृतामन्यस्मै दातुं प्रतिश्रुताम्। उत्तमं साहसम्। अन्यथाऽलङ्कृता न चेत्तदाऽधमं प्रथमसाहसं प्रातिलोम्ये उत्तमायां वधो हीनवर्णस्य अन्यथेति तस्या अकामत्वे।

तथा—

भर्त्तारं लङ्घयेद्या तु स्त्री ज्ञातिबलदर्पिता।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते॥

धनभ्रातृसौन्दर्यादिदर्पेण या पतिमवमन्य व्यभिचरेत्तां राजा लोकमध्ये कुक्कुरैः खादयेदित्यर्थः।

पुमांसं दाहयेत्पापं शयने तप्त आयसे॥
अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत्।

तस्यां चाऽनन्तरोक्तायां जारं बलदर्पेणाऽभिगन्तारं लोहमये तप्ते शयने शाययित्वा जीवन्तमेव दाहयेत्। मारणाधिकृताश्च पुरुषास्तत्र तद्दाहक्षमाणि काष्ठानि निक्षिपेयुरित्यर्थः।

मनुः—

अगुप्तां क्षत्रियां वैश्यां शूद्रां वा ब्राह्मणो व्रजन्।
शतानि पञ्च दण्ड्यः स्यात्सहस्रमन्त्यजस्त्रियम्॥

अन्त्यजो रजकचर्मकारादिः।

संवत्सराऽभिशस्तस्य दुष्टस्य द्विगुणो दमः।
व्रात्यया सह संवासे चाण्डाल्या वा स एव तु॥

आदौ परस्त्रीगमनदोषेण दुष्टस्य संवत्सरोपरि तस्यामेवाऽभिशस्तस्य प्रथमदमाद्द्विगुणदमः । व्रात्ययेत्यादि । व्रात्या व्रात्यजाता । व्रात्यश्च भ्रष्टधर्माचारः । "अवसन्नकर्मधर्माचारो व्रात्यः" इति हारीतवचनात् । "व्रात्या अतिक्रान्तविवाहकाला कन्या" इति हलायुधः । व्रात्यागमने चाण्डालीगमने च दमः सहस्रपणरूपः । स एव पुनर्गमने द्विगुणः कार्यः। तेन सर्वत्रैव सजातीयव्यभिचारे सत्यभ्यासे द्वितीये प्रथमदण्डद्वैगुण्यमित्यर्थः ।

अन्त्याभिगमने त्वङ्कबन्धेनैव प्रवासयेत् ।
शूद्रस्तथाङ्क्य एव स्यादन्त्यस्यार्यागमे वधः ॥

अङ्कबन्धोऽशिरस्कपुरुषोऽङ्कः तेनाङ्कयित्वा त्रैवर्णिकं प्रवासयेत् । शूद्रोङ्क्य एवेत्येवकारेण निर्वासनमात्रनिषेधः । तेनान्त्याभिगमने वधोक्तेरविरोधः । अन्त्यस्य चाण्डालस्यार्याभिगमने त्रैवर्णिकस्त्रीगमने वधः ।

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमाविशन् ।
अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते ॥

शूद्रस्यागुप्तत्रैवर्णिकस्त्रीगमने एकाङ्गच्छेदः सर्वस्वहरणं च। एकमङ्गं चात्र शिश्नरूपम्। आर्य्यस्त्र्यभिगमने लिङ्गोद्धारः। "सर्वस्वहरणं गुप्तां चेद्वधोऽधिकः" इति गौतमवचनात् । गुप्तगमने तु वधसहितं पूर्वोक्तं सर्वमित्यर्थः ।

वैश्यः सहस्रं दण्ड्यः स्यात्संवत्सरनिरोधतः ।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥

वैश्यस्य गुप्तब्राह्मणीगमने संवत्सरबन्धनात्परं पणसहस्रं दण्डः । क्षत्रियस्य तद्गमने स एव दण्डः । खरमूत्रेण च शिरोमुण्डनम् ।

ब्राह्मणीं यद्यगुप्तां तु गच्छेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम् ॥

सुगमम् वैश्यस्यायं दण्डह्रासः शूद्रातुल्याया ब्राह्मण्या गमने । अन्यस्यास्तु गमने क्षत्रियवदेव दण्डः ।

उभावपि च तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ तु कटाग्निना ॥

तौ क्षत्रियवैश्यौ ब्राह्मण्या गुणवत्या । अतो "वैश्यः सहस्रं दण्ड्यः स्यात्" इत्यादिना न विरोधः । शूद्रवदिति सर्वस्वदण्डलिङ्गच्छेदवधवन्तौ च कार्यावित्यर्थः । कटेन दाहपक्षे तु "वैश्यो लोहितदर्भैः क्षत्रियः शरपत्रैरावेष्ट्य" इति वसिष्ठवचनात्तत्तत्तृणवेष्टितौ तौ दाह्यावित्यर्थः ।

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् ।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥
मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥

प्राणान्तिको दण्डो ब्राह्मणस्य मुण्डनमेव इतरेषां तु वध एव ।

न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् ।
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥
इदं तु निर्वासनमसकृत्ताद्दशाऽपराधकरणे ।
न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि ।
तस्मादस्य वधं राजा मनसापि न चिन्तयेत् ॥

स्पष्टम् ।

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥

दण्डः पञ्चशतसहस्रपणरूपः । अयं च दण्डह्रासो गुणवद्वैश्यस्य निर्गुणक्षत्रियागमने । अन्यथा द्वावपि सहस्रं दण्ड्यौ ।

सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्रियविशोः सहस्रं वै भवेद्दमः ॥

ते क्षत्रियावैश्ये शूद्रायां गुप्तायां क्षत्रियायामगुप्तायाम् । क्षत्रियायामगुप्तायां वैश्यस्य पञ्चशतो दमः ।

मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव वा ।

क्षत्रियस्तु गुप्तक्षत्रियागामी खरमूत्रेण स्तिमितकेशो मुण्डनीयः पणपञ्चशतीं वा दण्डनीयः ।

अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् ।

शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजास्त्रियम् ॥

शूद्रामप्यगुप्तामेव। अन्ते भवोऽन्त्यः तस्माज्जातोऽन्त्यजः चाण्डालादिः तत्स्त्रीगमने ब्राह्मणस्य पणसहस्ररूपो दण्डः।

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति।
त्यजन्नपतितानेतान्राज्ञा दण्ड्यः शतानि षट् ॥

स्पष्टम्–

ऋत्विजं तु त्यजेद्याज्यो याज्यं चर्त्विक्त्यजेद्यदि।
शक्तं कर्मण्यदुष्टं च तयोर्दण्डः शतं शतम् ॥

निर्दोषपरिहर्तुः कर्मणि पणानां शतं दण्डः।

दास्यं तु कारयेल्लोभाद्ब्राह्मणः संस्कृतान्द्विजान् ॥
अनिच्छतः प्रभुत्वेन राज्ञा दाप्यः शतानि षट्।

दास्यं दासकृत्यं पादप्रक्षालनादि ॥

मात्स्ये–

यश्च संचारकस्तत्र पुरुषस्तु तदा भवेत्।
पारदारिकवद्दण्ड्यो यश्चागारावकाशदः ॥

यः स्त्रियं पुरुषं वाभिसारं प्रति सञ्चारयति यश्च तयोरभिसारस्थानं ददाति तौ पारदारिकवद्दण्ड्यावित्यर्थः।

बृहस्पतिः–

सहसा कामयेद्यस्तु तस्य सर्वहरो दमः।

अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥
दमोन्तिमः समायां तु हीनायामार्द्धिकः स्मृतः ।
पुंसः कार्योऽधिकायां तु गमनं संप्रमापणम् ॥

यः सहसा बलेन परस्त्रियमनिच्छन्तीमभिगच्छति तस्यान्तिम उत्तमसाहसो दण्डः । बलच्छले विहाय दूतादिप्रेषणेन बोध्यहीनामन्यपूर्वां शूद्रामभिगच्छतो मध्यमसाहसो दण्डः । उत्कृष्टजातीयां तु यथा तथाऽभिगच्छतो मारणं दण्ड इत्यर्थः ।

मनुः—

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये च श्वापदं कार्यं ब्रह्महण्यशिराः पुमान् ॥

स्तेयं हिरण्यचौर्यम् ।

याज्ञवल्क्यः—

स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्त्तनम् ॥

कर्णादीत्यादिशब्दः केशादिपरः । तेन बृहस्पतिवाक्येपि पुंसः प्रमापणं स्त्रियाश्च कर्णकेशच्छेदनेन सह द्रष्टव्यम् ।

विष्णुः—

गोगमने वान्त्यागमने वा वध उत्तमागमने च ।

अन्त्यास्पृश्या ।

नारदः–

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा तु या ॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते ॥

माताऽत्र जननीव्यतिरिक्ता पितृपत्नी । आसां विंशतेरन्यतमाया गमने शिश्नच्छेदः । गुप्ताविषयमेतत् ।

याज्ञवल्क्यः–

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा॥

आसां षण्णां मध्ये वा यथोक्तं प्रतियोगिनम् ।सकामा या रमयति । तस्यापि लिङ्गच्छेदनपूर्वको वधः ।

आपस्तम्बः–

नाश्य आर्यस्तु शूद्रायाम् ।

शूद्रायामनन्यपूर्वायां कृताभिगम आर्यो ब्राह्मणो नाश्यो विवास्यः ।

शूद्रस्येत्यनुवृत्तौ गोतमः–

आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं गुप्ता चेद्वधोधिकः ।

आर्यस्त्री त्रैवर्णिकस्त्री ।

आपस्तम्बः—

वध्यः शूद्र आर्यायां दारांश्चास्यापकर्षयेत् ।

अस्य उक्तव्यभिचारवतः शूद्रस्य दारान्भार्यामाकर्षयेत् । दासीं कुर्यादित्यर्थः ।

एतस्य वधे प्रकारमाह बौधायनः—

शूद्रं कटाग्निना दहेत् । द्विजस्त्रीगमन इति शेषः । कटो वीरणः ।

ब्राह्मणीरन्तारमित्यनुवृत्तौ यमः—

शूद्रं तु घातयेद्राजा शयने तप्त आयसे ।
दहेत्पापकृतं तत्र काष्ठैः पर्णैस्तृणैस्तथा ॥

हारीतः—

श्रेयसः शयनशायिनं राजा बद्ध्वा श्वभिः खादयेत् ।

श्रेयस उत्कृष्टवर्णस्य शयनशायिनं स्त्रीगामिनम् ।

गोतमः—

श्वभिस्तु खादयेद्राजा हीनवर्णगमे स्त्रियम् ।

वसिष्ठः—

शूद्रश्चेद्ब्राह्मणीं गच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषा अभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत् । पूता भवतीति विज्ञायते । वैश्यश्चेद्ब्राह्मणीं गच्छेच्छरपत्रैर्वेष्टयित्वा

वैश्यमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाऽभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत्। पूता भवतीति विज्ञायते । राजन्यश्चेद्ब्राह्मणीमभिगच्छेत् । शरपर्णैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत् । पूता भवतीति विज्ञायते । एवं वैश्यो राजन्यां मैथुनमाचरन् । शूद्रस्तु राजन्यावैश्ययोः ।

महापथो राजपथः ।

यमः–

वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम् ॥
वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्द्दभेन तु ॥

वध्यघातिनां सूनानियुक्तचाण्डालानाम् ।

बृहस्पतिः–

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्द्धदमः स्मृतः ॥
भिन्ननासौष्ठकर्णां तां परिभ्राम्याप्सु मज्जयेत् ।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते ॥

हन्यादित्यनुवृत्तौ विष्णुः–

स्त्रियमशक्तभर्तृकां पत्याऽनुपभुक्तां तदतिक्रामणीं

पुरुषान्तरगामिनीम् । मिलितं चेदं हनननिमित्तम् ।

धनदण्डे कात्यायनः—

नाऽस्वतन्त्राः स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यति ।
प्रभुणा शासनीया सा राजा तु पुरुषं नयेत् ॥

ग्राह्या दण्डार्थं धर्त्तव्याः । किन्तु राजा तत्पति-पुरुषं प्रति तां प्रतिपादयेत् । अथ तत्पतिद्वारा तद्दण्डं गृह्णीयादिति तात्पर्यम् ।

कात्यायनः—

प्रोषितस्वामिका नारी प्रापिता यद्यभिग्रहे ।
तावत्सा बन्धने स्थाप्या यावत्स्यादागतः प्रभुः ॥

अभिग्रहोऽभिसारः ।

मात्स्ये—

बलात्संदूषयेद्यस्तु परभार्यां कथञ्चन ।
वधो दण्डो भवेत्तस्य नाऽपराधो भवेत्स्त्रियाः ॥

## अथ वेश्याऽभिगमदण्डः ।

तत्र व्यासः—

परावरुद्धागमने पञ्चाशत्पणिको दमः ।
प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः ॥

परावरुद्धा व्यभिचारिण्येव केनचिन्नियतेन जारेण धृता ।

याज्ञवल्क्यः—

प्रसह्य दास्या गमने दण्डो दशपणः स्मृतः ।

बहुना यद्यकामाऽसौ चतुर्विंशतिकः पृथक् ॥
अयोनौ गच्छतस्तेषां पुरुषं वापि मेहतः ।
चत्वारिंशत्पणो दण्डस्तथा प्रव्राजितागमे ॥

असौ दासी यद्यकामा सती नैरन्तर्येण बहुभिः प्रतिगम्यते तदा तेषां प्रत्येकं चतुर्विंशतिपणात्मको दण्डः । अयोनौ स्त्रिया एव मुखादौ गच्छतः मेढ्रप्रयोगं कुर्वतः । पुरुषं मेहतः अतिरागेण पुरुषमभिगच्छतः । प्रव्रजिता तापसी ।

नारदः–

पशुयोनावतिक्रामन्विनेयः स दमं शतम् ।
मध्यमं साहसं गोषु तदेवान्त्यावसायिषु ॥
अतिक्रामन्मैथुनं कुर्वन्पणशतं दण्ड्यः ।

तथा–

सुवर्णं तु भवेद्दण्ड्यो गां व्रजन्मनुजोत्तमः ।

मध्यमं साहसमिदं वैश्यक्षत्रयोः शूद्रस्य गोगमने पूर्वं वधाभिधानात् । मनुजोत्तमस्य ब्राह्मणस्याऽग्रे सुवर्णरूपदण्डाभिधानात् ।

तथा–

वेश्यागामी द्विजो दण्ड्यो वेश्याशुल्कपणं स्मृतम्।

यद्वेश्यागमने शुल्कं पञ्चशतपणरूपं तावान् वेश्यागामिनो ब्राह्मणस्य दण्डः ।

व्यासः—

बहुभिर्भुक्तपूर्वां या तां गच्छेयुर्नराधमाः ।
तस्या वेश्यावदिच्छन्ति दण्डनं न तु दारवत् ॥

दारवत्कुलस्त्रीवत् ।

नारदः—

अगम्यागामिनः शास्ति दण्डो राज्ञा प्रकीर्तितः ।
प्रायश्चित्तविधानं तु पापराशेर्विशोधनम् ॥

यत्तु—

"राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥"

इति । तत्प्रायश्चित्तदण्डरूपदण्डपरम् । प्रकरणात् । अत एव कल्पतरौ सुवर्णस्तेयमुसलाघातप्रकरण एव तल्लिखितमिति ।

---

## अथ स्त्रीपुरुषधर्मः ॥ १६ ॥

तत्र याज्ञवल्क्यः—

रक्षेत्कन्यां पिता विन्नां पतिः पुत्राश्च वार्द्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः ॥

विन्नां विवाहिताम् । तेषां पुत्राणाम् ।

बृहस्पतिः—

अप्रयच्छन्पिता काले पतिश्चाऽनुपयन्नृतौ ।
पुत्रश्चाऽभक्तदो मातुर्गर्ह्यो दण्ड्यश्च धर्मतः ॥

मनुः–

नैता रूपं प्रतीक्षन्ते नासां वयसि संस्थितिः ।
अरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥

तथा–

साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् ।
तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥
स्वकाम्ये वर्त्तमाना सा स्नेहेन न निवारिता ।
अपथ्या तु भवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥

तथा–

शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥
एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥

मनुः–

पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति यस्तु धर्मे न तिष्ठति ॥
कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः ।
तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥

कार्षापणं ताम्ररूपम् ।

स्वदण्डश्च राज्ञाऽप्सु प्रक्षेपणीयः “ईशो दण्डस्य वरुणः” इति गौतमवचनस्वरसात् ।

मनुः—

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।
अपन्हवे तद्द्विगुणं तन्मनोरनुशासनम् ॥

ऋण इति । गृहेऽपलप्य करणे ऋणमभ्युपगच्छन्पणशते पञ्चपणान्करणेऽप्यलपन् प्रमाणेन ऋणस्थैर्ये पणशते दशपणान् भण्डी दण्ड्य इत्यर्थः ।

साक्ष्यधिकारे मनुः—

लोभात्सहस्रं दण्डस्तु मोहात्पूर्वं तु साहसम् ।
भयाद्द्वौ मध्यमौ दण्डौ मैत्रात्पूर्वं चतुर्गुणम् ॥
कामाद्दशगुणं प्रोक्तं क्रोधात्तु त्रिगुणं परम् ।
अज्ञानाद्द्वे शते पूर्वे बालिश्याच्छतमेव तु ॥
एतानाहुः कौटसाक्ष्ये प्रोक्तदण्डान्मनीषिभिः ।
धर्मस्याव्यभिचारार्थं स्वधर्मनियमाय च ॥
कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥

लोभान्मिथ्यानिगदे पणसहस्रम् । मोहात्तन्निगदे सार्द्धपणशतद्वयम् । भयात्तन्निगदे पणदशशतीम् । मैत्रात्तन्निगदे पणसहस्रम् । कामात्तत्स्त्रीरमणादीच्छारूपात्तान्निगदे सार्द्धपणसहस्रद्वयम् । क्रोधात्तन्निगदे पणसहस्रत्रयम् । अज्ञानात्तन्निगदे पणशतद्वयम् । बालिश्याद्दनवधानरूपात्तन्निगदे पणशतं कूटसाक्ष्ये दण्ड

इत्यर्थः । कूटसाक्ष्यमिति । असकृत्कूटं निगदतां क्षत्रियादीनां त्रयाणामपि साक्षिणां यथोक्तदण्डानन्तरं देशनिष्कासनम् । तादृशस्य तु समग्रधनसहितस्यैव ब्राह्मणस्य देशान्निष्कासनमात्रमित्यर्थः ।

मनुः–

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः ॥

तथा ताम्रिकः कार्षिकः पणः ।

तथा–

अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम् ।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्बिषम् ॥
अनेन विधिना शास्यः कुर्वन्नस्वामिविक्रयम् ।
अज्ञानाज्ज्ञानपूर्वं तु चौरवद्दण्डमर्हति ॥

अवहार्यो दाप्यः । सान्वयः स्वामिवंश्यः । निरन्वयस्तदन्यः । अपसरति द्रव्यमन्यतो याति येन तत् प्रतिग्रहक्रयादि तद्रहितः चौरकिल्बिषं चौरवद्दण्डम् । अनेनेत्यादि । सान्वयस्यापि ज्ञानपूर्वं विक्रेतुर्भ्रात्रादेश्चौरवद्दण्ड इत्यर्थः ।

तथा–

धर्मार्थं येन यद्दत्तं कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्यान्न देयं तस्य तद्भवेत् ॥

यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ॥

पश्चादिति याचकश्च धर्मकर्म नाकरोत् धनं चाग्रहीत् तदा परावृत्त्य दाप्यः । यदि च प्रतिश्रुतं तद्याचेत तदा न देयं यदि तु गृह्णीयात्तदा सुवर्णं दण्ड्य इत्यर्थः ।

## अथ दायविभागः ।

तत्र मुख्यकालमाह मनुः—

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन्पैतृकं ऋक्थमनीशास्ते हि जीवतोः ॥

समं तुल्यं नाऽत्र विंशोद्धारादीति यावत् । न च प्रमीतपितृकविभागमुपक्रम्यैव मनुना विंशोद्धारकथनार्थं कथनात्।कथं तुल्यांशतेति वाच्यम्। तस्य गुणवज्ज्येष्ठपरत्वाद्विंशोद्धाराकांक्षिज्येष्ठपरत्वाद्वा।ननु यद्धनं पितुः स्वातन्त्र्यविषयस्तस्य तत्सत्त्वे तदिच्छयैव विभाग इति तद्विभागः।पितुरूर्ध्वमित्यस्तु मातुरूर्ध्वमिति तु कथं मातुस्तत्रास्वत्वात् । न च विभागमुपक्रम्य "अस्वतन्त्राः पितृमन्तो मातर्यैवमवस्थितायाम्" इति शङ्खवचनादस्त्वेवमिति वाच्यम् । अस्य गुणवन्मातृस्तुतिपरत्वात् । न ह्यस्वामिनोऽप्यपेक्षा युक्तिमतीति चेत् पैतृकमित्यत्र एकशेषेण मातृधन-

स्याप्युपस्थितेर्मातृधन एव तदूर्ध्वगमनापेक्षाया अनेनोक्तत्वात् ।

अथ–

“पितर्यूर्ध्वंगते पुत्रा विभजेयुर्द्धनं पितुः ।
मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ॥”

इति नारदवचनेन मातृधने दुहितॄणां तदभावे दौहित्राणामेव ग्रहणाधिकारबोधनान्न पुत्रस्य तद्ग्रहणाधिकार इति चेत् । न । तस्यान्ययोगव्यवच्छेदपरत्वाभावात् ।

अत एव–

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन्मातृकं ऋक्थं भगिन्यश्च सनाभयः ॥

इति मनुरपि समुच्चयमेवाह । एवं च पितुः स्वातन्त्र्यविषयो धनं पितरि प्रमीते विभजनीयं सति तु तस्मिन्नक्षमे ।

तदुक्तं शङ्खेन–

अकामे पितरि ऋक्थविभागो वृद्धे विपरीतचेतसि रोगिणि वा ।

इति । विपरीतचेतसि निर्विण्णान्तःकरणे । क्षमे तु तस्मिन् जीवति तदिच्छयैव विभजनीयमिति वक्ष्यते। अथ वा मृते पितरि ज्येष्ठं पुरस्कृत्य वसेयुः ।

तदाह मनुः–

ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः ।

शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥
यो वा शक्तस्तं पुरस्कुर्युः ।
तदाह नारदः—
बिभृयाद्वेच्छतः सर्वाञ्ज्येष्ठो भ्राता यथा पिता ।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः ॥
धर्मार्थं वा विभजेरन् ।
तदाह मनुः—
एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया ।
पृथग्विवर्द्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया ॥
कथं विभागे धर्मवृद्धिः ।
बृहस्पतिः—
एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥

स्वासाधारणीभूतेन विभक्तधनेन भ्रात्रान्तरनैरपेक्ष्यस्वमात्रेच्छया इज्याऽनुष्ठानविभागे धर्मवृद्धिः ।

## अथ जीवत्पितृकविभागः ।

तत्र पुत्रा विभजेरन्नित्यधिकारे नारदः—
मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृत्ते रमणे वापि पितर्युपरतस्पृहे ॥

प्रत्तासु विवाहितासु । रमणे पितुरतिसामर्थ्यं उपरतस्पृहे विषयस्पृहाशून्ये ।

याज्ञवल्क्यः–

विभागं चेत्पिता कुर्यात्स्वेच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥

इयं च स्वेच्छा स्वार्जिते ।

तदाह विष्णुः–

पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे।

स्वयमुपात्तं स्वार्जितम् । तद्वत् स्वाम्युद्धृतमपि मनुवचनाऽनुरोधात् । अत्र च पितृद्रव्यानुपश्लेषस्तन्त्रम् । तदुपश्लेषार्जितस्य तु तद्वत् साधारण्यादेव । तथा च पित्रा पूर्वपुरुषद्रव्यानुपश्लेषेण यदर्जितं तस्य समविभागे विषमविभागे च पितैव प्रभुः । अत्र विभागोऽपि तदिच्छाबलादेव । अनीशताप्यत्रैव पुत्राणाम् ।

मनुः–

पैतृकं तु पिता द्रव्यमनवाप्य यदाऽप्नुयात् ।
न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्ज्जितम् ॥

पितृद्रव्यमपि परग्रस्तं यत्पित्राभ्युद्धृतं यच्च स्वयमर्जितं तत्रोभयत्रापि पितुरिच्छयैव विभागो न त्वनिच्छयेत्यर्थः ।

तथा–

पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम् ।

प्रदानं स्वेच्छया कुर्याद्भागं चैव ततो धनात् ।
तदभावे तु तनयाः समांशाः परिकीर्त्तिताः ॥

हृतं परैरपहृतं पितामहेन चाऽशक्त्या नोद्धृतं पित्रा तूद्धृतं यच्च विद्यार्ज्जितं तस्य विभागे दाने च पितुरेवेच्छा तन्त्रम् । तथा च प्राचीनधनाऽनुपश्लेषेण शौर्येण प्रकारान्तरेण वार्जिते । तथा तदनुपश्लेषेणाभ्युद्धृते च धने पितुरिच्छयैव दानविभागादि । एवंविध एव च धने ज्येष्ठायाऽधिकदाने स्वभागद्वयकरणे च पितुरिच्छा । एवंविधद्रव्य एव याज्ञवल्क्योक्ता समांशतापि–

"विभागं चेत्पिता कुर्यात्स्वेच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥"

इति तद्वचनस्य पितृस्वातन्त्र्यविषयमेव धनमधिकृत्य प्रवृत्तत्वात् ।

अत्रैव समांशकरणपक्षे विशेषमाह स एव–

यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥

अत्रोपक्रमे पितुर्विभागकर्त्तृत्वेनोपस्थितत्वात् तत्प्रतियोगिकमेव पत्नीत्वमवगम्यते । समांशिका इति । याभ्यः स्त्रीधनं दत्तं तत्समधनमात्तवत्योऽन्या अपि पत्न्यः पित्रा कार्याः । यदा तु स्वयमर्ज्जितं गृह्णाति पुत्रेभ्यः किंचिद्ददाति तदा स्वभागादेव तावद्धनं पत्न्या

ताभ्यो देयम् । अत एव "यदि कुर्यात्समानंशान्" इति समांशकरणपक्ष एव पृथग्दानमुक्तम् ।

हारीतः–

स्वल्पेन वा विभज्य भूयिष्ठमादाय तिष्ठेत् । यदि उपदश्येत पुनस्तेभ्यो गृह्णीयात् ॥

उपदश्येत निर्द्धनो भवेदित्यर्थः । इदमपि स्वार्ज्जितपरम् ।

नारदः–

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।

शङ्खलिखितौ–

स यद्येकपुत्रः स्याद्द्वावंशावात्मनः कुर्याद्द्विपदचतुष्पदेषु रूपमधिकम् । वृषभो ज्येष्ठाय गृहं यवीयसेऽन्यत्र पितुरवस्थानात् ।

रूपं वस्तु ।

तथा च–

पिता अंशद्वयं दासेषु श्रेष्ठमेकम् । एवं पशुष्वपि गृह्णीयात्।एको वृषः स गुणज्येष्ठाय । पित्रवस्थानातिरिक्तं च गृहं सगुणकनिष्ठाय देयम् । इदं च पितुरंशद्वयमेकपुत्रत्वे वचनयोरेकमूलकल्पनालाघवात् । पितुरस्वार्ज्जितधनविषयमेतत् । स्वार्ज्जिते तु स्वेच्छाविभजनीये एकपुत्रस्याप्रयोजकत्वात् । एकपदं चेह श्रेष्ठवाचि न तु संख्यावाचि । अन्यथा " ज्येष्ठाय यवीयसे "

इति विरुध्येत। तस्मात्सगुणौ ज्येष्ठकनिष्ठौ उक्तोद्धारभाजौ कार्यावन्ये तु पुत्रा धने समांशाः। पिता तु सोद्धारद्व्यंशभागिति संक्षेपः।

आपस्तम्बः—

एकधनेन ज्येष्ठं तोषयित्वा जीवत्पुत्रेभ्यो विभजेत्समम्।

जीवत्पदान्मृतस्य पत्न्या भागो नास्ति। तत्पुत्रस्य तु सोस्ति "आत्मा वै पुत्र" इत्यभिधानाद्वाक्यान्तराच्च। जीवन्निति तु रत्नाकरे पाठः। स न युक्तो विभागकर्त्तृतयैव जीवनस्य प्राप्तत्वे निरर्थकत्वात्। एकधनेन श्रेष्ठधनेन।

ज्येष्ठे देवलः—

बहिर्वर्णेषु चारित्र्याद्यमयोः पूर्वजन्मनः।
यस्य जातस्य समये पश्यन्ति प्रथमं मुखम्॥
सन्तानः पितरश्चैव तस्मिञ्ज्यैष्ठ्यं प्रतिष्ठितम्।

यस्य सवर्णाजातस्य मुखं प्रथमं पश्यति तस्मिन् सन्तानः प्रतिष्ठितः पितरः प्रतिष्ठिताः ज्यैष्ठ्यं च प्रतिष्ठितमित्यर्थः। तेन पितुः प्रथमापत्यं पुमान् ज्येष्ठः पतिसवर्णायां तु पश्चात्तदुत्पन्नोपि ज्येष्ठः।

तदुक्तं मनुना—

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः।

न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते॥

तेन नानावर्णासु भार्यासु पतिसवर्णायां पश्चाज्जातोपि ज्येष्ठ इत्यर्थः।

तथा—

यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन्यवीयसः।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः॥

मनुः—

ज्येष्ठस्य विंश उद्धारः पितृद्रव्याच्च यद्वरम्।
ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः॥

तथा—

सर्वेषां धनजातानामाददीताग्र्यमग्रजः।
यच्च सातिशयं किञ्चिद्दशतश्चाप्नुयाद्वरम्॥

बौधायनः—

दशानां चैकमुद्धरेज्ज्येष्ठः सममितरे विभजेरन्।
पितृरिक्थहराः पुत्राः सर्वे एव समांशतः॥
विद्याकर्मयुतस्तेषामधिकं लब्धुमर्हति।

अयं च ज्येष्ठस्य गुणवत्तरत्वे। विंशांशस्तु गुणवत्त्वे। समगुणत्वे तु किंचित्पारितोषिकमानतिकरमिति वर्त्तुलार्थः।

देवलः—

ज्येष्ठस्य दशमं भागं न्यायवृत्तस्य दापयेत्।

एतच्च ज्येष्ठस्याग्निवेदवत्त्वेऽन्येषां चातिनिर्गुणत्व इति हलायुधपारिजातौ।

बृहस्पतिः—

समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः।
तथैव ते पालनीयाः पतितास्ते स्युरन्यथा॥

इदं पित्रर्जितधनपरम्।

मनुः—

भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह।
न तत्र विषमं भागं पिता कुर्यात्कथञ्चन॥

इदं तु तुल्यव्यापारैर्भ्रातृभिरर्जितेऽतो न विरोधः।

बृहस्पतिः—

जन्मविद्यागुणज्येष्ठो द्व्यंशं दायादवाप्नुयात्।
समांशभागिनस्त्वन्ये तेषां पितृसमस्तु सः॥

इदं गुणवत्तमपितृवत्परिपालकज्येष्ठविषयम्।

तथा—

पितृरिक्थहराः पुत्राः सर्वे एव यथांशतः।
विद्याकर्मयुतस्तेषामधिकं लब्धुमर्हति॥

व्यासः—

साधारणं समाश्रित्य यत्किञ्चिद्वाहनादिकम्।
धनं शौर्यादिनाऽवाप्तं भ्रातरस्तत्र भागिनः॥
तस्य भागद्वयं कार्यं शेषास्तु समभागिनः।

शौर्यादिना असाधारणोपायेनापि चेत्साधारणधन-श्लेषेणार्जयति तदाऽर्जको द्व्यंशभागित्यर्थः ।

वसिष्ठः–

येन तेषां यत्स्वयमुपार्जितं स तद्द्व्यंशमाहरेत् ।

इदमपि पूर्ववत् ।

याज्ञवल्क्यः–

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।
अनेकपितृकाणां तु पितृतो भागकल्पना ॥

सामान्येति । सामान्यस्यार्थस्य कोपि भागी यदि कृषिवाणिज्यादिना वर्द्धनं करोति तदापि तस्य नांशाधिक्यमित्यर्थः । इदं त्वन्येषामप्येवंरूपत्वेऽन्यथाऽवशिष्टविरोधः स्यादिति द्रष्टव्यम् । अनेकेति । यदि त्वविभक्तानामेव भ्रातॄणां प्रमीतानां प्रत्येकं बहवः पुत्राः प्रत्येकं कृष्यादिसाधारणधनं कुर्वन्ति । तदापि ते पितृवत्प्रत्येकं न भागभाजः । किन्त्वेकजाः सर्वेपि पितृमात्रभागभाज इत्यर्थः ।

नारदः–

कुटुम्बार्थेषु यद्युक्तस्तत्कार्यं कुरुते तु यः ।
स भ्रातृभिर्बृहणीयो ग्रासाच्छादनवाहनैः ॥

यःकृषिवाणिज्यादिना कुटुम्बार्थे व्यापृतः तदाश्रयं संवर्द्धयति स भाग्यन्तरसममेवांशं लभते । अतस्त-

स्यायासानुसारेणान्नवस्त्राश्वादिना भागिभिर्वैलक्षण्येन पूरणं कर्त्तव्यमित्यर्थः ।

मनुः—

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ।
स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्वोपजीवनम् ।

यः कर्मणा स्वव्यवसायेन जीवितुं शक्तः साधारणं धनं न विभज्य गृह्णीयात् किं तु स भ्रातृभिर्गृहीतभागैः स्वस्वभागाद्धनमाकृष्य पूरणीय इत्यर्थः। पूर्वनारदवाक्यस्याप्ययमेवार्थ इति हलायुधः । प्रकाशकारस्तु—यो भागिषु धनार्थं व्यापृतेष्वालस्यादिना न व्याप्रियते स व्यापारजनिताद्धनाद्बहिः कार्यो मूलमात्रभागी कर्त्तव्य इत्यर्थकतया मनुवाक्यमिदं व्याख्यातवान् ।

कात्यायनः—

अविभक्ते निजे प्रेते तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥
लभेतांशं च पित्र्यं तु पितृव्यात्तस्य वा सुतात् ।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ॥
लभेत तत्सुतो वापि निवृत्तिः परतो भवेत् ।

निजे भ्रातरि । तत्सुतं भ्रातृजम् । जीवनं भागः । कीदृशं भागं लभेतेइत्यपेक्षायामाह—पित्र्यमंशमिति।

तत्सुतः यस्य धनं विभज्यते तस्य प्रपौत्रः । तथा च गृहिणो धनं पुत्रसंख्यया विभजनीयम् । तेन पुत्रस्य यो भागः स तेन तत्पुत्रैर्वा तत्पौत्रैर्वा ग्राह्यः । निवृत्तिरिति । न तु तत्प्रपौत्रैरित्यर्थः । इदं सहवासपरम् । एवं च प्रमीतस्य पत्नी न भागभागनभिधानात् ।

देवलः—

अविभक्तविभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः ॥

बीजिचतुर्थमभिव्याप्य दायविभागः । विभक्तानामपि संसर्गादौ सहवासे सतीयं व्यवस्था "वसतां सह" इति स्वरसात् ।

वसिष्ठः—

अथ भ्रातृणां दायभागो याश्चानपत्याः स्त्रियस्तासां चा पुत्रलाभात् ।

स्त्रिय इत्यत्रापि भ्रातृणामित्यर्थः । तथा च विधवायाः शङ्कितपुत्राया भ्रातृभार्याया भागः कर्त्तव्यः । तस्याः प्रसवे जाते स भागस्तत्पुत्रस्य । पुत्रे त्वनुत्पन्ने स भागस्तस्या देवरादिभिरेव ग्राह्य इत्यर्थः ।

पितुरित्यनुवृत्तौ बृहस्पतिः—

तदभावे तु जननी तनयांशसमांशिनी ।
समांशा मातरस्तेषां तुरीयांशा च कन्यका ॥

तदभावे पितुरभावे जननी पुत्रवती मातरः सपत्नीमातरोऽपुत्रा एताः सर्वाः पुत्रतुल्यभागा एषां भागिनां भगिन्यश्चाविवाहिता विवाहार्थं स्वांशतुरीयभाज इत्यर्थः।

नारदः—

येषां तु न कृताः पूर्वं संस्कारविधयः क्रमात्।
कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्॥
अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः।
अवश्यकार्याः संस्कारा भ्रातॄणां पूर्वसंस्कृतैः॥

संस्कारा उपनयनान्ताः।

व्यासः—

असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्त्तिताः।
पितामह्यश्च सर्वास्ता मातृतुल्याः प्रकीर्त्तिताः॥

याज्ञवल्क्यः—

पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्।

कात्यायनः—

प्रच्छादितं तु यद्येन पुनरागत्य तत्समम्।
भजेरन्भ्रातृभिः सार्द्धमभावेपि हि तत्सुताः॥
अन्योन्यापहृतं द्रव्यं दुर्विभक्तं च यद्भवेत्।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः॥
क्षेत्रं साधारणं कृत्वा योन्यदेशं समाश्रितः।

तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः ॥
तृतीयः पञ्चमो वाऽपि सप्तमो वापि यो भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥
इदं तु देशान्तरागतविषयम् ।
तथा–
यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥

## अथ भागानर्हाः ।

तत्र बृहस्पतिः–
सवर्णाजोप्यगुणवान्नार्हः स्यात्पैतृके धने ।
तत्सपिण्डाः श्रोत्रिया ये धनं तेषां विधीयते ॥
मनुः–
सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ।
विकर्मस्था विरुद्धकर्मासक्ताः ।
शङ्खः–
अपपात्रितस्य रिक्थपिण्डोदकानि निवर्त्तन्ते ।

अपपात्रितः अत्युत्कटेन दोषेण ज्ञातिभिः कृतघटापवर्जनः पितृरिक्थग्रहणश्राद्धतर्पणेष्वनधिकारी भवतीत्यर्थः ।

मनुः–
अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।

उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥
सर्वेषामपि तन्न्याय्यं दातुं शक्यं मनीषिणा ।
ग्रासाच्छादनमुत्पन्नं पतितो ह्यददद्भवेत् ॥
यद्यर्थिता तु दारैः स्यात्क्लीबादीनां कथंचन ।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥

निरिन्द्रियाः पाणिपादादिहीनाः । श्रौतस्मार्त्तक्रियाऽनधिकारिणो दायानर्हा इति वर्त्तुलार्थः । तत्पुत्रास्तु पतितोत्पादितवर्जास्तदर्हाः ।

याज्ञवल्क्यः—

पतितस्तत्सुतः क्लीबः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगार्त्तो भर्त्तव्यास्तु निरंशकाः ॥
अचिकित्स्यकुष्ठादिमान्दायानर्हः ।
औरसक्षेत्रजास्तेषां निर्दोषा भागहारिणः ।
सुतास्त्वेषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृताः ॥

पतितौरसाः पूर्वोत्पन्ना एव । अन्यौरसा उत्तरजा अपि ।

सुताः पित्रा प्रभर्त्तव्या निर्दोषाः साधुवृत्तयः ।
अपुत्रा योषितश्चैव भर्त्तव्याः साधुवृत्तयः ॥
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ।
एषां क्लीबादीनाम् । प्रतिकूला विषादिप्रदाः ॥

नारदः—

पितृद्विट् पतितः पण्डो यश्च स्यादपपात्रितः ।

औरसा अपि नैतेंशं लभेरन्क्षेत्रजाः कुतः ॥

पितृद्विट् पितरि जीवति तत्ताडनादिकृत् । मृते तु तच्छ्राद्धादिविमुखः ।

दीर्घतीव्रामयग्रस्ता जडोन्मत्तान्धपङ्गवः ।
भर्त्तव्याः स्युः कुलस्यैते तत्पुत्रास्त्वंशभागिनः ॥

दीर्घं यक्ष्मादि । तीव्रं कुष्ठादि । जडो निर्विवेकः ।

देवलः–

मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः ।
पतितः पतितापत्यं लिङ्गी दायांशभागिनः ॥
तेषां पतितवर्ज्जानां भक्तवस्त्रं प्रदीयते ।
तत्पुत्राः पितृदायांशं लभेरन्दोषवर्ज्जिताः ॥

मृत इत्युपलक्षणम् । लिङ्गी अतिशयेन कपटवेशधारी । दोषो भागानर्हताप्रयोजकः ।

वसिष्ठः–

अनंशा आश्रमान्तरगताः ।

आश्रमान्तरं गार्हस्थ्यात् ।

कात्यायनः–

अक्रमोढासुतश्चैव सगोत्रायाश्च जायते ।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु कर्हिचित् ॥

सवर्णाक्रमेण विवाहः शास्त्रीयस्तदतिक्रमेणोढा अक्रमोढा तथा क्रमोढाया अपि सगोत्रायाः पुत्रः तथा प्रव्रज्यां गृहीत्वा ततो भ्रष्ट एते भागानर्हा इत्यर्थः ।

अत्राद्ये विशेषमाह स एव–

अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः।

अक्रमोढासुतोपि पितुः सवर्णो भागभागित्यर्थः। तदयं सङ्क्षेपः विरुद्धकर्मासक्तः उत्कटदोषेणापपात्रितः पतितः क्लीबः तथा प्रतिक्रियम्। आन्ध्यं बाधिर्य्यम्। औन्मत्त्यं जडत्वं मूकत्वं पाणिपादादिहीनत्वं वा येषां ते तथा कुष्टादिमान् पितृद्विट् राजयक्ष्मी अतिशयेन कपटवेशधारी आश्रमान्तरगतश्च भागानर्हः। एतेषां पुत्राः पतितजनितवर्ज्जं भागानर्हत्वप्रयोजकदोषरहिताः सन्तो भागार्हा एव।

## अथासंस्कृतसंस्कारः।

तत्र व्यासः–

असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात्।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि॥

नारदः–

अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः।
अवश्यकार्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः॥

याज्ञवल्क्यः–

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः।
भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम्॥

मनुः–

स्वेभ्यः स्वेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।

स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥

स्वेभ्यो भ्रातृभ्यस्तेन कन्याभ्यस्तत्सजातीयभ्रातृभागाच्चतुर्थं भागमाकृष्य भ्रातरो दद्युरित्यर्थः । अत्र चतुर्थभागदानमविवक्षितम् । किन्तु यावता संस्कारो निर्वहति तावद्देयम् " अरूढानां तु कन्यानां वित्तानुसारेण संस्कारं कुर्यात्" इति विष्णुवचनात् । रत्नाकरादयोऽप्येवम् ।

## अथ विभाज्यम् ।

पैतामहं च पित्र्यं च यत्किञ्चित्स्वयमर्जितम् ।
दायादानां विभागे तु सर्वमेतद्विभज्यते ॥

स्वयमर्जितं पितृद्रव्योपश्लेषेण ।

नारदः—

यच्छिष्टं पितृदायेभ्यो यद्दत्तं पैतृकं च यत् ।
भ्रातृभिस्तद्विभक्तव्यमृणी स्यादन्यथा पिता ॥

पितृदायः पितृणं दत्तं पित्रा दातुमङ्गीकृतम् । एवं च पितृणं परिशोध्य पश्चाच्छेषं वण्टनीयमित्यर्थः ।

## अथाऽविभाज्यम् ।

तत्र मनुः—

विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥

मैत्रं मित्रपुरस्कारेण लब्धम् । औद्वाहिकं वक्ष्यते ।

माधुपर्किकं मधुपर्ककाले पूज्यतया लब्धमर्हणादि ।

मनुविष्णू—

अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम् ।
स्वयमीहितलब्धं च नाकामो दातुमर्हति ॥

श्रमः सेवादि । ईहितं कृष्यादि । उपलक्षणं चैतत् । साधारणाऽनुपश्लेषेणाऽर्जितमर्जकस्याऽऽसाधारणं भवतीत्यर्थः ।

व्यासः—

पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम् ।
तस्य तन्नापहर्त्तव्यं मात्रा दत्तं च यद्भवेत् ॥

तथा—

अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम् ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ।

अनुपश्लेषार्जितं च विद्यालब्धं च द्वयमभाज्यमित्यर्थः। विद्ययापि साधारणधनानुपश्लेषेण यदर्जितं तदेवाऽविभाज्यमिति तु प्रकाशः । तन्न । उभयोपादानानर्थक्यापत्तेः । रत्नाकरादयोप्येवम् । ननु

"वैद्योऽवैद्याय नाऽकामो दद्यादंशं स्वतो धनात् ।
पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदा कृतम् ॥"

इति नारदवचनेन पितृद्रव्योपश्लेषेण विद्ययाप्यर्जितं विभाज्यमेवेत्यवसीयत इति चेत् । सत्यम् । किं

तु यत्र विद्यार्जनेपि धनार्जनवत् साधारणधनोपश्लेषः ।

अत एव विद्यार्जनेपि साधारणधनाऽनुपश्लेषं पुरस्कृत्यैवाविभाज्यत्वमाह कात्यायनः–

परभक्तप्रदानेन प्राप्तविद्यो यदन्यतः ।
तया प्राप्तं तु यद्वित्तं विद्याप्राप्तं तदुच्यते ॥
कुले विनीतविद्यानां भ्रातृतः पितृतस्तथा ।
शौर्यप्राप्तं तु यद्वित्तं तद्विभाज्यं बृहस्पतिः ॥

विद्या शस्त्रशास्त्रयोः । तेन पित्रादितः स्वदायाच्छस्त्रं शास्त्रं वाऽधीत्य तेन यदर्जयति तत्र भ्रात्रन्तराणामपि भाग इत्यर्थः ।

उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्याद्विभागे न विभज्यते ॥
शिष्यादार्त्विज्यतः प्रश्नात्सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥
विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते ।
शिल्पेष्वपि हि धर्मोयं मूल्याद्यच्चाधिकं भवेत् ॥
विद्याप्रतिज्ञया लब्धमेतद्विद्याधनं भृगुः ।

आर्त्विज्यतः वरणकरणादितः । प्रश्नात्स्वकृतात् प्रश्नस्य निर्णयात् प्राध्ययनात् बहुविद्यत्वात् शिल्पार्जितमपि विद्यार्जितवत् । अल्पमूल्येनैव यद्द्रव्यं

विक्रेत्रा विक्रेतरि पुरुषे दत्तं तत्राधिकभागः क्रेतुरसाधारणः। अहमेवेमां विद्यां वेद्मीत्यादिविधा प्रतिज्ञा।

कात्यायनः—

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः।
भागं विद्याधनात्तस्मात्स लभेताऽश्रुतोपि सन्॥

तदयं संक्षेपः। परपिण्डोपजीवनेन परतोऽधीतेन शस्त्रेण शास्त्रेण वा विद्योपार्जनकाले दायादैरपुष्यमाणकुटुम्बकेन साधारणधनमाश्रित्यापि यदर्जितं तद्विद्यार्जितमविभाज्यम्।

यादृशं शौर्यधनमविभज्यं तदाह मनुः—

आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते।
तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः॥
तत्र लब्धं च यत्किञ्चिद्धनं शौर्येण तद्भवेत्।
ध्वजाहृतं भवेद्यत्तु विभज्यं नैव तत्स्मृतम्॥
संग्रामादाहृतं यच्चु विद्राव्य द्विषतां बलम्।
स्वाम्यर्थं जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते॥

यादृशमौद्वाहिकमसाधारणं तदाहायमेव—

यल्लब्धं लाभकाले तु स्वजात्या कन्यया सह।
कन्यागतं तु तद्वित्तं शुद्धं वृत्तिकरं स्मृतम्॥
वैवाहिकं तु तद्विद्याद्भार्यया तत्सहागतम्।
धनमेवंविधं सर्वं विज्ञेयं धर्मसाधनम्॥

## अथ भागकल्पना ।

तत्र मनुः–

अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ।
समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥

ईहा कृष्यादिः । समः अविषमः । अपित्र्य इति । तेन विंशोद्धारादिरपि नात्राऽस्ति ।

स्वयमर्जितमित्यनुवृत्तौ गोतमः–

अविद्याः समं भजेरन् ।

वसिष्ठः–

येन चैषां स्वयमुत्पादितं स्यात् स तद्व्यंशमाहरेत् ।

यदा बहूनां भ्रातॄणां मध्ये साधारणधनमाश्रित्यैक एव कृष्यादिनार्जयति । तदा तस्य द्वावंशौ शेषाणामेकैकांशः ।

व्यासः–

साधारणं समाश्रित्य यत्किञ्चिद्वाहनाऽऽयुधम् ।
शौर्यादिनाऽऽप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं कार्यं शेषास्तु समभागिनः ॥

आदिपदस्य प्रकारवाचितया बहुव्रीहेश्चास्य तद्गुणसंविज्ञानतया असाधारण्योपायविद्यापरिग्रहः । ननु साधारणधनाश्रयणेनापि विद्याशौर्यादिना यदर्जितं तदविभाज्यमिति प्रागुक्तमनेन विरुद्ध्येतेति चेत् । न ।

तस्य कात्यायनादिपरिभाषितविद्यादिशौर्यादिपरत्वा-दस्य तु तदितरप्रकारविद्योपष्टम्भमात्रपरत्वात् ।

अथ स्त्रीधनविभागे प्रस्तोतव्ये प्रथमं तावत्स्त्रीध-नलक्षणमेवोच्यते ।

तत्प्रपञ्चे तु मनुकात्यायनौ–

अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतितः स्त्रियै ।
मातृभ्रातृपितृप्रत्तं षड्विधं स्त्रीधनं स्मृतम् ॥

षड्विधमिति न्यूनव्यवच्छेदपरम् ।

अत्राद्यत्रयमाह कात्यायनः–

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
दीयते येन केनापि सङ्कोचकाभावात्तथा ।
यत्पुनर्लभते नारी नीयमाना हि पैतृकात् ।
अध्यावाहनिकं नाम स्त्रीधनं समुदाहृतम् ॥

द्विरागमनकाले यत्कुतोपि प्राप्तं तदध्यावाहनिक-मित्यर्थः ।

तथा–

प्रीत्या दत्तं तु यत्किञ्चिच्छ्वश्वा वा श्वशुरेण वा ।
पादवन्दनिकं यत्तल्लावण्यार्जितमुच्यते ॥

लावण्यं शीलनैपुण्यादि । तथा च पादप्रणतायै शीलादिमत्यै वा स्त्रियै श्वशुरादिना यद्दत्तं तृतीयं

स्त्रीधनमित्यर्थः । मात्रादिदत्तत्रितयं व्यक्तमेव । आधिवेदनिकं सप्तमम् ।

यदाह याज्ञवल्क्यः–

अधिविन्नास्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम् ॥

द्वितीयेन पत्युर्विवाहेन प्रथमा भार्य्या अधिविन्ना भवति तस्यै पत्याधिवेदनकाले यद्दत्तं तदाधिवेदनिकम् ।

विष्णुस्तु–

पितृमातृसुहृद्भ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकं शुल्कमन्वाधेयमिति स्थितिः ॥

अत्राद्यानि षडुक्तानि ।

शुल्के कात्यायनः–

गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम् ।
मूल्यं लब्धं तु यत्किञ्चित्तच्छुल्कं परिकीर्त्तितम् ॥

गृहोपस्करादिकरणोपाधिना स्त्रिया गृहपतितो यल्लब्धं तच्छुल्कमित्यर्थः ।

तथा–

विवाहात्परतो यत्तु लब्धं भर्तृकुलात्स्त्रिया ।
अन्वाधेयं तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥

एवं दश स्त्रीधनानि भवन्ति । एतदेव स्त्रीणां सौदायिकम् ।

तदाह कात्यायनः—

ऊढया कन्यया वापि पत्युः पितृगृहेथवा ।
प्राप्तं सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥

पत्युरित्यत्रापि गृहे इति सम्बन्धः। सार्द्धमित्यपपाठः। भ्रातुरित्युपलक्षणम् । तेन कन्यया वा ऊढया वा पितृतो वा तत्कुलतोपि वा यल्लब्धं तत्सर्वं सौदायिकमित्यर्थः । वक्ष्यमाणं वृत्त्यादिकमेतत्प्रपञ्चः।

तद्विनियोगमाह स एव—

सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

नाभिकुललब्धे स्थावरेपि यथेष्टं स्त्रिया दानादौ स्वातन्त्र्यमित्यर्थः ।

सौदायिके आपस्तम्बः—

अलङ्कारो भार्याया ज्ञातिधनं चेत्येके ।

भार्यायाःस्वमिति शेषः। ज्ञातिधनं विवाहादौ लब्धं पितृकुलात्पतिकुलाद्वा ।

अलङ्कारे मनुविष्णू—

पत्यौ जीवति यः कश्चिदलङ्कारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥

पत्युरदत्तोपि तदनुज्ञया परिहितोऽलङ्कारः तावतैव भार्यायाः स्वीभवतीति मेधातिथिः । अस्मिंश्च स्थावरे जङ्गमे च दानविक्रययोः स्त्रीणां स्वातन्त्र्यं पूर्वलिखितकात्यायनवचनात् ।

नारदः–

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेपि तत् ॥
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ।

एवं च भर्तृदत्ते जङ्गमे परं स्त्रिया दानादौ स्वातंत्र्यं न तु स्थावरेऽपीति । एवं सौदायिके व्यवस्था सिद्धा ।

अत्र कात्यायनः–

भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः ।
विद्यमाने तु संरक्षेत्क्षपयेत्तत्कुलेऽन्यथा ॥
अपुत्रा शयनं भर्त्तुः पालयन्ती गुरौ स्थिता ।
भुञ्जीताऽऽमरणात्क्षान्ता दायादा ऊर्ध्वमाप्नुयुः ॥

भर्तृदायो भर्तृधनम् । तच्च तस्मिन्नसति ग्राहकान्तराभावात्स्त्रीस्वत्वास्पदीभूतम् । यस्मिन् सति तदनुज्ञया स्त्रीस्वत्वास्पदीभूतं च । तत्राद्य आह– "मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः" इति । इदं तु स्थावरेतरपरम् । स्थावरे त्वाह–

"भुञ्जीताऽऽमरणात्क्षान्ता दायादा ऊर्ध्वमाप्नुयुः"

क्षान्ताऽनतिव्यापनी । अपुत्रेत्यादि । तदधिकार-

प्रयोजकं विशेषणम् । द्वितीये त्वाह "विद्यमाने तु संरक्षेत्" इति । सति पत्यौ तद्धनं रक्षेदित्यर्थः । अन्यथेति । पतिधनाऽभावपक्षे विधवा पतिकुल एव कालं नयेदित्यर्थः।एवं च मृतस्य पत्युः स्थावरे भार्या।संक्रान्तेऽपि न तस्यास्तद्दानादावधिकारस्तौल्यात् । अन्यथा तत्र कीदृशी व्यवस्थेत्याकाङ्क्षाऽपूर्णैव तिष्ठेत् ।अत एव चास्य वचनस्य सौदायिकप्रकरणाम्नानविरोधोऽप्यपास्तः । प्रकरणाऽपेक्षया आकाङ्क्षाया बलवत्त्वात् । यथा पतिदत्ते स्थावरे एतद्वचनाद्दानादौ स्त्रीणामनधिकारस्तथा पत्युः स्थावरेऽपि स्त्रीसंक्रान्ते । एवमेव प्रकाशरत्नाकरौ । एवं पुत्रादिद्वारा स्त्रीसंक्रान्तेपि पतिःस्थावरे । अत्राप्याकाङ्क्षासत्त्वात्,साक्षात्त्वस्य चाश्रुतेः।

प्रकृते तु देवलः—

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि ॥

वृत्तिर्वृत्त्यर्थं धनं दत्तम् ।आभरणमलङ्कारः। शुल्कं विवाहार्थितया कन्यायै दत्तम् । लाभो बन्धुभ्यो लब्धम् । एतत्सर्वं स्त्रीधनम् ।

तथा—

वृथा दाने च भोगे च स्त्रियै दद्यात्सवृद्धिकम् ।
पुत्रार्त्तिहरणे चापि स्त्रीधनं भोक्तुमर्हति ॥

स्त्रीणामननुमत्या च तद्धनस्य वृथादानभोगौ न कार्यौ । पुत्रप्रतीकारार्थं कार्यावेवेत्यर्थः ।

तदनुमत्या त्वनापद्यपि तद्ग्राह्यमित्याह स एव—

तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।
मूलमेव स दाप्यः स्याद्यदा स धनभाग्भवेत् ॥
व्याधितं व्यसनस्थं च धनिकैश्चोपपीडितम् ।
ज्ञात्वा निसृष्टं संप्रीत्या दद्यादात्मेच्छया हि सः ॥

व्याध्यादिग्रस्तं पत्यादिकमवेत्य स्त्रिया यत्स्वधनं प्रयुक्तं तत्स्वेच्छया पत्यादिर्दद्यादित्यर्थः ।

याज्ञवल्क्यः—

दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके ।
गृहीतं स्त्रीधनं भर्त्रा न स्त्रियै दातुमर्हति ॥

प्रतिरोधके इति व्याधिविशेषणम् । कर्मानुष्ठानबाधके इत्यर्थः । तथा चावश्यकधर्माद्यनुष्ठानस्य प्रकारान्तरेण कर्तुमशक्तितस्य निर्वाहार्थं पत्या यद्भार्यायाः स्त्रीधनं गृहीतं तन्नाऽकामेन देयमित्यर्थः ।

अस्यापवादमाह कात्यायनः—

अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ॥
प्रीत्या निसृष्टमपि यत्प्रतिदाप्यः स तद्बलात् ।
ग्रासाऽऽच्छादनवासानामाच्छेदो यत्र योषितः ॥
तत्र स्वमाददीत स्त्री विभागमृक्थिनस्तथा ।
लिखितस्येति धर्मोऽयं प्राप्ते भर्तृकुलं वसेत् ।

व्याधिता प्रेतकाले तु गच्छेद्बन्धुजनं ततः ॥
अपकारक्रियायुक्ता निर्लज्जा चाऽर्थनाशिका ।
व्यभिचाररता या च स्त्रीधनं न तु सार्हति ॥
भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं सुतैः ।
तिष्ठेद्भर्तृकुले सा तु न सा पितृकुले वसेत् ॥

भजत इत्यादि।यदि ऋतावपि पतिस्तां न भजते। यदि वा ग्रासं वस्त्रं वा न ददाति तदा तस्मै व्याध्यादिनिस्तारार्थमपि स्त्रिया दत्तं स्वधनं बलादपि ग्राह्यमित्यर्थः । प्राप्त इत्यादि । तस्मिन्नृणे प्राप्ते सा भर्तृकुल एव वसेन्न तु पितृकुले यायादित्यर्थः । अपकारेत्यादि । एतादृश्याः स्त्रीधनमप्याच्छिद्य बान्धवैर्ग्राह्यमित्यर्थः । भर्त्रेति सुगमम् ।

## अथ स्त्रीधनविभागः ।

तत्र मनुः—

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन्मातृकं ऋक्थं भगिन्यश्च सनाभयः ॥
यास्तासां स्युर्दुहितरस्तासामपि यथांशतः ।
मातामह्या धनात्किञ्चित्प्रदेयं प्रीतिपूर्वकम् ॥

समम् अविषमांशम् । सनाभयः सहोदराः ।
भगिन्यः कुमार्य एव समांशाः ।

तदाह बृहस्पतिः—

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।

अप्रत्ता चेत्समूढा तु लभते मानमात्रकम् ॥

अपत्यानां पुत्राणां तदंशिनी। विशेषाऽश्रुत्या समत्वलाभः। समूढा विवाहिता मानमात्रकं द्रव्यानुसारेण किञ्चित्।

गौतमः–

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च।

अप्रतिष्ठिता अनपत्या। निर्द्धनभर्त्तृका दुर्भगा चेति रत्नाकरादयः। एता अपि पुत्रवन्मातृधनभाजः।

मनुः–

मातुश्च यौतुकं यत्स्यात्कुमारीभाग एव सः।

यौतुकं विवाहकाले पित्रादितो लब्धम् ॥

वसिष्ठः–

मातुः पारिणाय्यं स्त्रियो विभजेरन्।

पारिणाय्यं परिच्छदादर्शकङ्कतिकादि ॥

याज्ञवल्क्यः–

मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः।

मातुर्द्धनं तदृणाच्छेषं तदृणपरिशोधनशेषं दुहितरो भजेरन्। ताभ्य ऋते दुहितॄणामभावेऽन्वयः। दौहित्रदौहित्र्यौ मनुवचनात्। ब्राह्मादिवैवाहिकं परिच्छदादिकं च यन्मातुर्धनं तद्विषयमेतत्।

कात्यायनः–

दुहितॄणामभावे तु ऋक्थं पुत्रेषु तद्भवेत्।

बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् ॥
भगिन्यो बान्धवैः सार्द्धं विभजेयुः सभर्तृकाः ।
स्त्रीधनस्येति धर्मोऽयं विभागस्तु प्रकल्पितः ॥

दुहितॄणामिति । परिणाय्यं ब्राह्मादिविवाहकाले पितृदत्तं यौतुकं च यन्मातुर्धनं तत्तस्याः पुत्र्यभावे पुत्रगामि भवतीत्यर्थः । एतदतिरिक्तं तु स्त्रिया धनम् । तस्या अभावे पुत्रीपुत्रोभयगामीत्युक्तमेव प्राक् । बन्धुदत्तमिति पित्रतिरिक्तेन दत्तं यत्तद्भ्रातृभगिन्योः, किंतु कन्या तत्र समांशा, विवाहिता तु किञ्चिद्भागभागिति भगिन्य इत्यादेरर्थः । अभावे पुत्रीपुत्राद्यभावे । स्त्रिया धनं पतिगामीत्यर्थः ।

मनुः—

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
अतीतायामप्रजसि भर्त्तुरेव तदिष्यते ॥
यत्त्वस्याः स्याद्धनं किञ्चिद्विवाहेष्वासुरादिषु ।
अतीतायामप्रजसि मातापित्रोस्तदिष्यते ॥

अप्रजसि अनपत्यायाम् ।

गौतमः—

भगिनीशुल्कं सौदर्याणामूर्ध्वं मातुः पूर्वं चेत्येके ।

आसुरादिविवाहत्रयलब्धविषयमेतत् ।

बौधायनः—

ऋक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम् ।

तदभावे भवेन्मातुस्तदभावे भवेत्पितुः ॥

## अथ गुप्तप्राप्तविभागः ।

तत्र याज्ञवल्क्यः-

अन्योन्यापहृतं द्रव्यं विभक्ते यत्र दृश्यते ।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥

अत्राऽविभक्तत्वादेव विभागे प्राप्ते वचनारम्भोऽत्र चौर्यदोषाऽभावं ज्ञापयतीति हलायुधः ।

कात्यायनः-

अन्योन्यापहृतं द्रव्यं निर्विभक्तं च यद्भवेत् ।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः ॥
बन्धूनामविभक्तानां भोगं नैव प्रदापयेत् ।

समभागेन पूर्वसमभागेन । भोगं गुप्तसाधारणधनभोगं भोक्ता न दाप्य इत्यर्थः ।

## अथ वर्णसमवायविभागः ।

तत्र मनुः-

चतुरोंशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ।
वैश्यासुतो द्व्यंशमेकमंशं शूद्रासुतो हरेत् ॥

भारते-

अष्टधा तु धनं कार्यं क्षत्रियस्य युधिष्ठिर ।
क्षत्रियाया हरेत्पुत्रश्चतुरोंशान्पितुर्द्धनात् ॥
युद्धाभिचारिकं यच्च पितुरंशाद्धरेच्च तत् ।

वैश्यापुत्रस्तु भागांस्त्रीञ्छूद्रापुत्रस्तथाष्टमम् ॥
एकैव तु भवेद्भार्या वैश्यस्य कुरुनन्दन ।
द्वितीया वा भवेच्छूद्रा न तु दृष्टा ततः स्मृता ॥
पञ्चधा तु धनं कार्यं वैश्यस्य भरतर्षभ ।
वैश्यापुत्रेण हर्त्तव्याश्चत्वारोंऽशाः पितुर्धनात् ।
पञ्चमस्तु भवेद्भागः शूद्रापुत्रस्य भारत ॥

ब्राह्मणस्य चतुर्भार्यत्वे क्षत्रियस्य त्रिभार्यत्वे वैश्यस्य द्विभार्यत्व इयं व्यवस्था। यदि तु नैवं भार्याभूत्तदा तत्पुत्रोचितो भागो दशसु अष्टसु पञ्चसु च न कार्यः। युद्धाभिचारिकमश्वखड्गादि ।

तथाह विष्णुः—

अथ चेच्छूद्रापुत्रवर्जं ब्राह्मणस्य पुत्रास्तदा नवधा धनं विभजेयुः। क्षत्रियादावप्येवम् ।

बृहस्पतिः—

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् ॥

वृद्धमनुः—

ब्रह्मदायागतां भूमिं हरेयुर्ब्राह्मणीसुताः ।
गृहं द्विजातयः सर्वे तथा क्षेत्रं क्रमागतम् ॥

ब्रह्मदायागतां याजनाध्यापनप्रतिग्रहलब्धाम् । द्विजातयस्त्रैवर्णिकाः ।

शङ्खः-

शूद्रापुत्रोऽर्थभागी यदेवास्य पिता दद्यात्। स एव भागस्तस्य गोमिथुनं चापरं दद्यात् । कृष्णायसं कृष्णधान्यं तिलवर्जम् ।

मनुः-

यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥
ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात्तदेवाऽस्य धनं भवेत् ॥

सत्पुत्रो विद्यमानत्रैवर्णिकरूपपुत्रः । अपुत्रस्तद्र-हितः। न रिक्थभाक्पित्रनुग्रहेऽपि न दशमांशातिरिक्त-ऋक्थभागिति कल्पतरुः । अत्यन्तनिर्गुणऊढशूद्रा-पुत्रोऽपि न पितृऋक्थभागभागिति पारिजातः ।

बृहस्पतिः-

अनपत्यस्य शुश्रूषुर्गुणवाञ्छूद्रयोनिजः ।
लभेदा जीवनं शेषं सपिण्डाः समवाप्नुयुः ॥

अनपत्यस्य पितुस्त्रैवर्णिकपुत्रशून्यस्य सपिण्डाः सन्निहितास्तदभावे व्यवहिता अपि । इदं चाऽनूढशू-द्रापुत्रपरमपरिगृहीतस्त्रीत्यधिकारात् ।

मनुः-

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत्।

सोनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ।

याज्ञवल्क्यः—

जातोपि दास्यां शूद्रेण कामतोंशहरो भवेत् ।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्द्धभागिनम् ॥

शूद्रस्यानूढशूद्रापुत्रः पितुरिच्छया भागं लभते । तदसत्त्वे तु ऊढापुत्रस्य स्ववैमात्रेयस्य भागापेक्षयार्द्धभागभागित्यर्थः ।

तथा—

अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ।

शूद्रस्योढापुत्रदौहित्रयोरभावे सकलमेव धनमनूढापुत्रो हरेदित्यर्थः ।

गोतमः—

शूद्रापुत्रवत्प्रतिलोमासु शूद्रादिना वैश्यादिषु स्त्रीषु जनितः शूद्रापुत्रवत् ।

जीविकामूलं हलफालादि किञ्चिल्लभत इत्यर्थः ।

## अथ विभक्तजविभागः ।

स च विभक्तजो द्विविधः । विभागकाले गर्भस्थस्तदनन्तरं च ।

तत्राऽऽद्ये याज्ञवल्क्यः—

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥

विभागभाग्भागार्हो भवतीत्यर्थः । दृश्याद्वेति । दृश्यमात्रात् दृश्याऽदृश्योभयरूपाद्वा धनात्तैर्भागाऽप्राप्तात् । आयेन उत्तरोपचयेन व्ययेन उत्तरापचयेन विशोधितात् । तेन व्ययीकृतशेषात् उदीच्यवृद्धिरहितात् स भागं लभत इत्यर्थः । विकल्पश्चायं सगुणनिर्गुणविषय इति हलायुधः ।

विष्णुः–

पितृविभक्ता विभागानन्तरमुत्पन्नस्य भागं दद्युः ।

अस्यापि पूर्ववदर्थः ॥

द्वितीये मनुः–

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत् ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥

यथा भ्रातॄंशाद्गर्भस्थः प्राप्नोति तथा नाऽयं प्राप्नोतीत्येवकारेण द्योत्यते । किं तु पितृधनमेव लभेत । अत्रापि विशेषः । यदि जीवत्येव पितरि तद्भागादि ग्रहीतुमिच्छति । तथापि च भागाकांक्ष्येव तदा पितृभागे पितुर्विभक्तजस्य चांशौ कार्यौ । पितरि प्रमीते तु तद्भागः समग्रो विभक्तजस्यैव । स्वपिता चेत् स्वभ्रात्रा स्वपुत्रेण वा सह संसृष्टीभूतस्ततः प्रमीतस्तदा विभक्तजः पितुरंशं ततो लभेत इति वाक्यार्थः ।

बृहस्पतिः–

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः ।

जघन्यजाश्च ये तेषां पितृभागहरास्तु ते ॥

अनीशः पूर्वजः। पित्र्ये भ्रातृभागे विभक्तजः। जघन्यजा इति। विभक्तजवदेते पितृभागमात्रं लभन्त इत्यर्थः। विभक्तज इति। विभक्तस्सन्नित्यर्थः।

तथा–

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्ज्जितम्।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथर्णेऽपि दानाधानक्रयेषु च।
परस्परमनीशास्ते मुक्त्वाशौचोदकक्रियाः ॥

विभागसमये गर्भस्थस्य विभागानन्तरमुत्पन्नस्य विभक्तैर्भागिभिः स्वस्वभागेभ्य आकृष्य भागपूरणं कर्त्तव्यम्। तदन्यस्य तु विभक्तजस्य पितृधनमात्रभागितेति मन्वादिमतमिति स्थितम्।

## अथ पुत्राः।

तत्र यमः–

पुत्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥
स्वयमुत्पादितस्त्वेको द्वितीयः क्षेत्रजः स्मृतः।
तृतीयः पुत्रिकापुत्र इति धर्मविदो विदुः ॥
पौनर्भवश्चतुर्थस्तु कानीनश्चैव पञ्चमः।
गृहे च गूढ उत्पन्नः षडेते पिण्डदाः स्मृताः ॥

अपविद्धः सहोढश्च दत्तः कृत्रिम एव च ।
पञ्चमः क्रीतकः पुत्रो यश्चोपनयते स्वयम् ॥
इत्येते सङ्करोत्पन्नाः षडदायादबान्धवाः ।
नारदः–
औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥
पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा ।
स्वयं चोपगतः पुत्रा द्वादशैते प्रकीर्त्तिताः ॥
एषां षड्बन्धुदायादा षडदायादबान्धवाः ।
पूर्वः पूर्वः स्मृतो ज्येष्ठो जघन्यो यो य उत्तरः ॥
क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने ।
ज्यायसो ज्यायसो भावे जघन्यो यो य आप्नुयात्॥
पूर्वपूर्वाभावे उत्तरोत्तरेषां द्रविणार्हत्वमित्यर्थः ।
मनुः–
पुत्रान्द्वादश यानाह नृणां स्वायम्भुवो मनुः ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥

बौधायनः—

औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ।
गूढं चैवाऽपविद्धं च ऋक्थभाजः प्रचक्षते॥
कानीनं च सहोढं च क्रीतं पौनर्भवं तथा।
स्वयं दत्तं निषादं च गोत्रभाजः प्रचक्षते॥

औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तकस्वयमुपागतकृतक्रीतानभिधाय देवलः

एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः।
आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा॥
तेषां षड्बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट्।
विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते॥
सर्वे ह्यनौरसाश्चैते पुत्रा दायहराः स्मृताः।
औरसे पुनरुत्पन्ने ज्यैष्ठ्यं तेषां निवर्त्तते॥
तेषां सवर्णा ये पुत्रास्तृतीयांशस्य भागिनः।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः॥

औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्नसहोढदत्तक्रीतस्वयमुपागताऽपविद्धान् यत्र क्वचनोत्पादितानभिधाय विष्णुः—

एतेषां पूर्वः पूर्वः श्रेयान्स एव दायहरः स चान्यान्बिभृयात्।

औरसः प्रथमः क्षेत्रजो द्वितीयः पुत्रिकापुत्रस्तृती-

यः पौनर्भवश्चतुर्थः कानीनः पञ्चमः गूढोत्पन्नः षष्ठः सहोढः सप्तमः दत्तोऽष्टमः क्रीतो नवमः स्वयमुपागतो दशमः अपविद्ध एकादशः पारशवो द्वादशः। कृत्रिमो द्वादशः पारशवस्त्रयोदश इत्यन्ये ।

विवादे विष्णुरप्येवम् ।

औरसक्षेत्रजपुत्रिकापुत्रगूढोत्पन्नकानीनपौनर्भवदत्तक्रीतकृत्रिमस्वयमुपागतसहोढापविद्धाः ।

पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः ।

याज्ञवल्क्यः—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतः स्मृतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयङ्कृतः ।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत्सुतः ।
पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः ॥

धर्मपत्नी परिणीतसवर्णा तस्यां स्वयमुत्पादितः । परिणीतसवर्णायां स्वयमुत्पादित औरस इति तल्ल-

क्षणात् । द्वितीयः पुत्रिकापुत्रः । तृतीयः क्षेत्रजः। स च क्षेत्रिणः पुत्रेच्छायां क्षेत्रिणः। बीजिनस्तदिच्छायां बीजिनः। उभयोस्तदिच्छायामुभयीयः। गूढोत्पन्नश्चतुर्थः। स च स्वमातृजातीयतद्वोढुः सुतः। कानीनः पञ्चमः। स च मातामहस्याऽपुत्रत्वे मातामहस्य मातृवोढुरपुत्रत्वे तस्य सुतः। पौनर्भवः षष्ठः। स च पुनर्वोढुः सुतः। दत्तकः सप्तमः। स च ग्रहीतुः सुतः। क्रीतोऽष्टमः। स च मात्रा पित्रा धनमादाय दत्तोनपत्यत्वेन स्वीकृतः क्रेतुः पुत्रः। कृतो नवमः। स चाऽपुत्रेण पुत्रीयता पुत्रीभवनकामः प्रेषसंप्रतिपत्तिभ्यां कृतस्तथा कर्त्तुः पुत्रः। स्वयमुपागतो दशमः। स च मातापितृहीनः क्रोधादिना तत्त्यक्तो वा यस्मिन्स्वेच्छया पुत्रत्वेनाऽऽत्मानमर्पयति तस्य पुत्रः। सहोढ एकादशः। स च गर्भिणी या परिणीयते तस्यामुत्पन्नो वोढुः सुतः। अपविद्धो द्वादशः। स च मातापितृभ्यां तयोरेकतरेण वा दारिद्र्यादिना त्यक्तो येन पुत्रत्वेन वृतस्तस्य पुत्रः।

बृहस्पतिः—

एक एवौरसः पुत्रो धने स्वामी प्रकीर्त्तितः।
तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्यास्त्वपरे सुताः॥

मनुः—

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।

शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥

आनृशंस्यं दया। प्रजीवनं भरणम्। प्रथमकृतस्तु पुत्रिकापुत्रः पश्चाज्जात औरसे तत्समांशभाक्।

तदाह स एव–

पुत्रिकायां कृतायां तु यदि पुत्रोनुजायते।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥

कात्यायनः–

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः।
सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः॥

इदं तु तृतीयांशहरत्वं क्षेत्रजस्य।

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः॥

इति ब्रह्मपुराणैकमूलकत्वात्। अत्युत्कृष्टगुणवत्तरविषयमित्यन्ये।

पुत्रं प्रकृत्य वसिष्ठः–

तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्यते। स चतुर्थभागभागी यदि स्यात्। यदि नाभ्युदयिकेषु प्रयुक्तं स्यात्। तस्मिन्पुत्रे स प्रतिगृहीतपुत्रः।

यदि स्यात्प्रभूतं धनमिति शेषः। यद्यौरसेन आभ्युदयिकेषु यज्ञेषु प्रयुक्तं न स्यात्। अत्र मन्वादिभिः सर्वैरेव पुत्रान्तरसत्त्वेऽप्यौरसस्यैव सकलपितृ-

धनग्राहित्वमुक्तम् । तैरेव तेषामपि ततोऽशभागित्वमुक्तम् । अयं च विरोध औरसस्य सगुणत्वे । तेनैव सकलमृक्थं ग्राह्यम् । तस्य निर्गुणत्वेऽन्येषां सगुणत्वे यथोक्तभागेन तद्ग्राह्यमिति समाधेयः । एवं दत्तकस्य क्षेत्रजस्य वा न्यूनाधिकांशग्रहणमपि नानामुन्युक्तं तस्यैवैकस्य सगुणत्वनिर्गुणत्वाभ्यां समाधेयम् । यस्तु श्राद्धेऽपि क्रमेणाधिकारविधायकयोर्विष्णुयाज्ञवल्क्ययोर्विरोधः । सोपि सगुणत्वनिर्गुणत्वाभ्यां विकल्पेन वा समाधेय इति ।

एकमातृकयोर्भिन्नपितृकयोस्तु विभागे विष्णुः—

अनेकपितृकाणां तु पितृतो भागकल्पना ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥

पुत्रास्तु सर्व एव श्राद्धचिन्तामणौ[१] प्रपञ्चिता नेह तन्यन्ते । शास्त्रोक्तरीतिं विना ये पुत्रास्ते पुत्राभासत्वान्न ऋक्थभाजः ।

## अथापुत्रधनाधिकारिणः ।

तत्र विष्णुः—

अनपत्यस्य धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे मातृगामि तदभावे पितृगामि तदभावे भ्रातृगामि तदभावे बन्धुगामि तदभावे सकुल्यगामि तदभावे सहाध्यायगामि तदभावे ब्राह्मणधनवर्जं राजगामि ।

---

१ एतद्ग्रन्थकर्तुरयं "श्राद्धचिन्तामणि" नामा ग्रन्थोऽस्तीति बोध्यम् ।

बन्धुरत्र सपिण्डः सकुल्यः सगोत्रः ।

बृहस्पतिः-

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तेता चतुर्दशात् ॥
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते ।

अनपत्यस्य पुत्रपौत्रप्रपौत्रहीनस्य पुत्रः पौत्रः प्रपौत्रो वेत्यादिनाऽमीषां पाठिकक्रमेणैव स्वधाऽधिकारे सिद्धे तत्समानशीलस्य ऋक्थग्रहणस्यापि तथैवाधिकारसिद्धेः । एवं च प्रपौत्राऽभावे पत्न्यधिकारः ।

अत्रैव वृद्धमनुः-

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥

बृहस्पतिरपि-

सकुल्यैर्विद्यमानैस्तु पितृभ्रातृसनाभिभिः ।
अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥
पूर्वप्रमीताग्निहोत्रमृते भर्त्तरि तद्धनम् ।
विन्देत्पतिव्रता नारी धर्म एष सनातनः ॥
जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम् ॥
पितृव्यगुरुदौहित्रान्भ्रातृस्वस्त्रीयमातुलान् ।
पूजयेत्कव्यपूर्त्ताभ्यां वृद्धाऽनाथाऽतिथीन्स्त्रियः ॥

तत्सपिण्डा बान्धवा ये तस्याः स्युः परिपन्थिनः ।
हिंस्युर्द्धनानि तान्राजा चौरदण्डेन शासयेत् ॥

श्राद्धपरिसंख्यानस्वरसेन तस्य प्रेतश्राद्धानि प्रत्याब्दिकानि च कुर्य्याद्धनं चाखिलं गृह्णीयादिति वर्तुलार्थः । इदं च विभक्तपतिधनपरम् । पतिव्रता साध्वी। न तु पतिव्रतैव । अनुमरणपर्यन्तेन पतिव्रतत्वानिश्चयाद्धनग्रहणाभावापत्तेः । तथा च साध्वी भार्या पत्युः प्रपौत्रान्ताऽभावे तद्धनार्हा ।

अविभागे तु शङ्खः—

भ्रातृभार्याणां च स्नुषाणां च न्यायतः प्रवृत्तानामनपत्यानां पिण्डमात्रं गुरुर्दद्याज्जीर्णानि वासांस्यविकृतानि ।

हारीतः—

विधवा यौवनस्था च नारी भवति कर्कशा ।
आयुषः क्षपणार्थं हि दातव्यं स्त्रीधनं सदा ॥

संसृष्टिभार्यापरमिदमिति बालरूपः ।

अविभक्तप्रमीते तु पत्यौ तस्यांश एव नाभूदतः किमियं गृह्णातु।न च सैवांशप्रतियोगिनी,प्रापकाभावात् । नचैतान्येव वाक्यानि प्रापकाणि । एषां विभक्तधनपरत्वेनाप्युपपत्तेः । अत एव "भ्रातॄणां दायभागो याश्चानपत्याः स्त्रियस्तासां चा पुत्रलाभात् " इति वसिष्ठ-

सूत्रम् । भ्रातृभार्यायां विधवायां पत्याहितगर्भायां तद्देवरादीनां विभागे प्राप्ते तस्या अपि शङ्कितपुत्रप्रसवाया भाग आप्रसवं स्थाप्यः । स च तस्याः पुत्रे अनुत्पन्ने देवरादिभिर्ग्राह्य इति रत्नाकरादौ व्याख्यातम् ।

भारते–

स्त्रीणां स्वपतिदायस्तु उपभोगफलः स्मृतः ।
नापहारं स्त्रियः कुर्युः पतिवित्तात्कथञ्चन ॥

अपहारमैच्छिकं दानविक्रयादिकम् । पत्न्यभावे दुहितृगामि लिखितविष्णुवचनात् ।

नारदोऽपि–

पुत्राऽभावे तु दुहिता तुल्यसन्तानदर्शनात् ।
पुत्रश्च दुहिता चोभे पितुः सन्तानकारिके ॥

मनुरपि–

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि जीवन्त्यां कथमन्यो धनं हरेत् ॥

बृहस्पतिः–

अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणाम् ।
तस्याः पितृधनं त्वन्यः कथं गृह्णीत मानवः ॥

यादृशी सा पितृऋक्थग्राहिणी तामाह स एव–

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ।
कृताकृता वा पुत्रस्य पितुर्द्धनहरी भवेत् ॥

"अपुत्रस्य मृतस्य कुमारी ऋक्थं गृह्णीयात्तदभावे चोढा" इति पराशरवचनात्। तथैवात्र क्रम इति बालरूपः। न चैतत्सर्वं पुत्रिकाविषयम्। अकृतेति तु वचनेन कृताभिसन्धिना तु कृताकृतैवैतत्परमिति वाच्यम्।अत्र सत्त्वेपि तस्याः पुत्रसमधनग्रहणाधिकारस्य मनुनाभिहितत्वादिति।तदभावे मातृगामि।विष्णूक्तेः।

बृहस्पतिः—

भार्यासुताविहीनस्य तनयस्य मृतस्य च।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया॥

तदनुज्ञया मात्रनुज्ञया। मातृपदमप्यत्र पितुरप्युपलक्षणम्। तेन तदनुज्ञया मातापित्रोरनुज्ञयेति पारिजातः।

बृहस्पतिः—

यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु।
तथैव तत्सुतोपीष्टे मातृमातामहे धने॥

मनुः—

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च॥

एतत्तु द्वयं पुत्राद्यभावे, पत्नी दुहितर इत्यादिक्रमानुरोधात्।

मनुरपि—

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।

मातर्यपि च वृत्तायां पितुर्माता धनं हरेत् ॥

दुहितृशून्यस्य माता धनं हरेत्। सकुल्यान्तशून्यस्य धनं पितामही हरेदित्यर्थः। मात्रभावे पित्राद्यधिकारस्य व्यवस्थापितत्वात्। मात्रभावे पितृगामि। विष्णुवचनात्।

अत्रैव मनुरपि—

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा।

भ्रात्रधिकारो विष्णुवचनबलादेव।

अत्रैव गोतमः—

प्रेतानां धनं ज्येष्ठस्य।

भ्रातुरित्यर्थः।

मनुः—

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्।

आपस्तम्बः—

आसन्नः सपिण्डस्तदभावे व्यवहितः तदभावे आचार्यः तदभावे अन्तेवासी।

याज्ञवल्क्यः—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुतो गोत्रजो बन्धुः शिष्यःसब्रह्मचारिणः॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥

पितरावित्यत्र क्रमाकाङ्क्षायामादौ माता तदभावे पिता। विष्णुस्मृत्येकमूलत्वात्। तत्सुतो भ्रातुः सुतः। अपुत्रस्य पुत्रपौत्रप्रपौत्रशून्यस्य।

कात्यायनः—

विभक्ते संस्थिते द्रव्यं पुत्राऽभावे पिता हरेत्।
भ्राता वा जननी वापि माता वाथ पितुः क्रमात्॥

पित्रर्जितं पिता भ्रात्रर्जितं भ्रात्रादिरिति व्यवस्थितो विकल्पः।

पैठीनसिः—

अपुत्रस्याऽभार्यस्य भ्रातृगामि द्रव्यं तदभावे मातापितरौ लभेताम्।

देवलः—

ततो दायमपुत्रस्य विभजेरन्सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा॥
सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम्।
एषामभावे गृह्णीयुः सकुल्याः सहवासिनः॥

तुल्याः सहोदराः।सवर्णा भ्रातरो वैमात्रेयादयः। अत्र च देवलोक्तक्रमेण सह विष्णुयाज्ञवल्क्योक्तक्रमयोर्विरोधमाशङ्क्य यथाक्रममिति पदं देवलीयं याज्ञवल्क्योक्तक्रमानतिक्रमेणेति हलायुधेन व्याख्यातम्। देवलवचनलिखनान्तरं विष्णुयाज्ञवल्क्यवचने लिखि-

तवतः कल्पतरुकृतोप्येवमेवाशयः। एतत्तु न मनोरमम्। नहि स्वोक्तं क्रममुल्लङ्घ्य परोक्तःक्रमो यथाक्रममिति स्वोक्तक्रमस्यार्थो भवितुमर्हति ॥ उपस्थितं परित्यज्याऽनुपस्थितपरिग्रहे गौरवात्। एवमपि पैठीनसिवचनविरोधापरिहाराच्च । तस्मात् पूर्वपुरुषार्जितधने विष्णुयाज्ञवल्क्योक्तः क्रमः । तदन्यधने तु पैठीनस्याद्युक्तक्रम इति रत्नाकरः ।

बौधायनः–

सपिण्डाभावे सकुल्यस्तदभाव आचार्योऽन्तेवासी ऋत्विग्वा हरेत् । तदभावे राजा ।

सगोत्राऽभावे बन्धुर्याज्ञवल्क्यवचनात्। स च स्वबन्धुः पितृबन्धुः मातृबन्धुश्च ।

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
पितुः पितुः स्वसुः पुत्राः पितृमातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुःपितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥

एतेषां क्रमेणाऽधिकारः। बालरूपोऽप्येवम्। ब्राह्मणधनवर्जं राज्ञा ग्राह्यम्।

तदाह मनुः—

अहार्यं ब्राह्मणधनं राज्ञां नित्यमिति स्थितिः ।
इतरेषां तु वर्णानां सर्वाऽभावे हरेन्नृपः ॥

देवलः—

सर्वत्रादायकं राजा हरेद्ब्रह्मस्ववर्जितम् ।
अदायकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ॥

अदायकं दायादशून्यम् ।

बृहस्पतिः—

येऽपुत्राः क्षत्रविट्छूद्राः पत्नीभ्रातृविवर्जिताः ।
तेषां धनहरो राजा सर्वस्याधिपतिर्हि सः ॥

बौधायनः—

ब्रह्मस्वं पुत्रपौत्रघ्नं हन्यादेकाकिनं विषम् ।
तस्माद्राजा ब्राह्मणस्वं नाददीत कथञ्चन ॥

शङ्खलिखितौ—

परिषद्गामि श्रोत्रियद्रव्यं न तु राजगामि ।

परिषद्ब्राह्मणाः।तदयं संक्षेपः।पुत्रस्तदभावे पौत्रस्तदभावे प्रपौत्रस्तदभावे साध्वी भार्या तदभावे दुहिता तदभावे माता तदभावे पिता तदभावे भ्राता तदभावे तत्पुत्रः तदभावे आसन्नसपिण्डस्तदभावे यथाक्रमं व्यवहितसपिण्डस्तदभावे आसन्नसकुल्यस्तदभावे यथाक्रमं व्यवहितसकुल्यस्तदभावे मातृकुलादिः

सर्वाभावे ब्राह्मणधनवर्जं राजा । ब्राह्मणधने तु सद्ब्राह्मणान्तरमेव धनाधिकारीति ।

याज्ञवल्क्यः–

वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।
क्रमेणाऽऽचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥

क्रमेण प्रतिलोमक्रमेण । तेन ब्रह्मचारिणो गुरुकुलस्याचार्यः यतेस्तच्छिष्यः वानप्रस्थस्य भ्रातृत्वेनानुमतोऽपरो वानप्रस्थ एव । "यद्यप्यनंशाश्चाऽऽश्रमान्तरगताः" इति वसिष्ठवचनाद्वानप्रस्थयतिनोर्न पैतामहादिधनसम्भवः । तथापि वानप्रस्थस्य वार्षिकसञ्चयः । यतेस्तु कौपीनाद्येव धनमिति ।

शङ्खः–

न हार्यं स्त्रीधनं राज्ञा तथा बालधनानि च ।
नार्याः षडागमं वित्तं बालानां पैतृकं धनम् ॥

षडागममध्यग्नीत्यादिपरिभाषितम् ।

मनुः–

बालदायगतं रिक्थं तावद्राजाऽनुपालयेत् ।
यावत्स्यात्स समावृत्तो यावच्चातीतशैशवः ॥

## अथ संसृष्टविभागः ।

तत्र बृहस्पतिः–

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।

पितृव्येणाऽथ वा प्रीत्या स तु संसृष्ट उच्यते ॥

अस्माकमेकतमस्यापि स्वं सर्वेषामस्माकं स्वमित्युपगमस्तावत्संसर्गः। स च व्याहारादिवानन्यथासिद्धाद्व्यवहारादपि गम्यते। तेषां भूतभाविभवद्धनेष्वेकैकार्जितेष्वपि सर्वेषां स्वत्वानि जनयति। तत्र परिसंख्यानबलात्पितृभ्रातृपितृव्यैरेव विभागपूर्वकं धनमेलनं संसर्ग इति प्रकाशः। तन्न। आवृत्तिवाचिपुनःपदस्वरसेन विभागपूर्वधनमेलनस्यैव लाघवेन संसर्गपदार्थत्वात्। तेन विभागप्रतियोगिना पितृव्यपुत्रादिना संसर्गो लभ्यते। पित्रादिग्रहणं तु प्रपञ्चनमात्रम्। अत एवाऽनास्थायां वाकार इति रत्नाकरादयः। नव्यास्तु। पृथग्धनानां धनमेलनमेव संसर्गः, लाघवात्। न तु प्राग्विभागे सति, गौरवात्। पृथग्धनत्वं तु निसर्गतो वा विभागतो वेत्यन्यदेतत्। संसर्गे तु संसृजतोरनुमतिर्मूलम्।सा च निसर्गतः पृथग्धनयोरपि न दण्डवारिता। अन्यथा पित्रा विभक्ततदुत्तरजेन भ्रात्रा संसृष्टो न स्यात्। बाढमिति चेत्। न। दृश्यन्ते हि तथा संसृष्टा अपीति। बाले तु भागिनि मात्राद्यनुमत्यैव विभागवत्संसर्गोऽपि व्यवहारसंवादात्।

तथा—

विभक्ता भ्रातरो ये च संप्रीत्यैकत्र संस्थिताः।

तत्पुनर्भागकरणे ज्यैष्ठ्यं तेषां न विद्यते ॥
कदाचिद्वा प्रमीयेत प्रव्रजेद्वा कथञ्चन ।
न लुप्यते तस्य भागः सोदरस्य विधीयते ॥
या तस्य भगिनी सा तु ततोंऽशं लब्धुमर्हति ।
अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥
संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाऽधिकम् ।
धनं प्राप्नोति तत्राऽस्य द्व्यंशः शेषाः समांशिनः ॥

एकत्रेति संसृज्येत्यर्थः ।

ज्यैष्ठ्यमिति । अंशाधिक्यप्रयोजकहेतुसत्त्वेऽप्यंशाधिक्यं नेत्यर्थः । विद्याद्यर्जिते त्वस्यापवादमयमेव वक्ष्यति । कदाचिदिति । संसृज्य तेषामेकतमो यदि प्रापणेनाश्रयान्तरकरणेन वा भागानर्हो भवति तदापि तद्भागो न लुप्यते । तर्हि स भागः किमीयो भवतीत्याकाङ्क्षायामाह–सोदरस्येति । संसृष्टिसोदरस्येत्यर्थः ।

सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

इति मनुवचनेनैकमूलकल्पनालाघवात् । तथा च सोदर्या अप्यसंसृष्टिनो लभन्त इति भावः । केचित्तु किञ्चिद्धनविभागाऽनन्तरं संसर्गे वृत्ते तत एकस्मिन् संसर्गिणि प्रमीते स्थालीपुलाकन्यायेनाविभक्तेष्वपि धनेष्वंशेयत्तावधारणरूपो विभागो वृत्त एवेति कृत्वा

शृङ्गग्राहिकतया तस्याप्यंशः कर्त्तव्यः। स च सोदर-संसृष्टिग्राह्यः । तत्रैव चानपत्यस्येत्यादिपर्युदास इ-त्याहुः। तन्नान हीयत्तावधारणरूपं विभागफलं तस्य, तत्कालजीवितयैव सिद्धत्वात् । किन्त्विदं त्ववधारणं तच्च शृङ्गग्राहिकतयाक्षपातं विना न भवत्येव । त-स्मात्प्रसृतस्य प्राचीनस्य सर्वभागिस्वत्वनिवहस्य सङ्कोचो वा । प्रादेशिकतत्तत्पुरुषीयस्वत्वान्तरोत्प-त्तिर्वा विभागफलम् । तच्च त्वदक्षपातविषयो न मम। मदक्षपातविषयो न तवेति भागिनां योऽयमभ्युत्थितोऽ-भ्युपगमस्तद्रूपाद्विभागात् । स च तत्तदक्षपातोपहित-स्तदक्षपातः। क्रमिकश्चेत्तदा राशिरेव विभक्तः। अथ क्रमिकस्तदा क्व स्थालीपुलाकन्यायः सामग्रीभेदादिति

याज्ञवल्क्योपि—

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः।
दद्याच्चापहरेदंशं जातस्य च मृतस्य च ॥

जातस्य जीवत इत्यर्थं इति हलायुधः । अन्ये तु पितापुत्रयोः संसर्गे पितुश्च भागानन्तरं पुत्रे जाते पितरि च प्रमीते संसृष्टी पुत्रः पितुरंशं तस्मै जातकाय दद्यादित्यर्थमाहुः । संसृष्टिनास्त्विवति । प्रमीतसंसृष्टि-भागे संसृष्टयन्तरस्य ग्रहणाऽधिकारः। सोदराऽसोदर-संसर्गे तु सोदरस्येति वाक्यार्थः। एवं च पितापुत्रयो-

रपि संसर्गे विभक्तपुत्रान्तरसत्त्वे पितुर्भागं संसृष्टचेव पुत्रः प्राप्नोति नासंसृष्टीत्यविशेषेणाभिधानात्। विभक्तो यः पुनः पित्रा इत्यादिना पितापुत्रयोरपि संसर्गकथनाद्युक्तं चैतत्।पुत्रान्तराणां पितृधने विभागेन स्वत्वस्य निराकृतत्वात् । संसर्गिपुत्रस्य तु संसर्गेण तस्य जनितत्वात् । न चाऽनपत्यस्य धर्मोऽयमिति पर्युदासग्रहणान्नैवमिति वाच्यम् । तस्य संसर्गानन्तरजातविषयत्वात् । तथा च संसृष्टिनः पितुर्भागं विभागानन्तरजाताः पुत्रा लभन्ते । तदसत्त्वे तु संसृष्टी पुत्रो भ्रात्रादिर्वा न त्वसंसृष्टी पुत्र इति वर्तुलार्थः ।

"ऊर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत् ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥"

इति मनुवचनात् । उत्तरार्द्धेन तस्यैव पितृदायहरत्वे सिद्धे तस्यैवाभावे संसृष्टिनोऽधिकारस्य युक्तत्वात् । अत एव–

"अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजे" ।

इत्यपि । नन्वेवं पुत्रैः समं विभज्य भ्रात्रा संसृज्य पुत्रमनुत्पाद्य प्रमीतस्यांशः संसृष्टस्य भ्रातुः स्यान्न त्वसंसृष्टस्य पूर्वविभक्तस्य पुत्रस्येति चेत् । बाढम् ।

संसृष्टिनि सापत्न्येऽसंसृष्टिनि सोदरे च सत्याह याज्ञवल्क्यः–

अन्योदर्यस्तु संसृष्टी नान्योदर्यधनं हरेत् ।

असंसृष्ट्यपि चादद्यात्सोदरो नान्यमातृजः॥

अन्योदर्य्यस्तु संसृष्टी सन् अन्योदर्यस्य धनं हरेत्। न त्वसंसृष्टी सन्। सोदरस्य तु असंसृष्ट्यपि सन् आदद्याद्धनमिति विभिद्यान्वयः। "नाऽन्योदर्यो धनं हरेत्" इति पाठस्तु सुगमः। नान्यमातृज इत्यनुवादः। एवं चान्योदर्यस्य संसृष्टत्वं सोदरस्य तु सोदरत्वमेतद्धनग्रहणे बीजमित्युक्तं भवति। संसृष्ट्यपि सन्नन्योदर्यो नाऽन्योदर्यधनं हरेदिति वर्तुलार्थः। संसर्गविरोधात्। संभवन्यायमूलाया अप्यस्याः स्मृतेर्वेदमूलत्वापत्तेश्च।

नारदः—

संसृष्टानां तु यो भागस्तेषामेव स इष्यते।
अतोन्यथांशभाजस्तु निर्बीजेष्वितरानियात्॥

तेषामेव संसृष्टानामेव। अतोन्यथा संसृष्टानामभावेंऽशभाजस्तदंशभाजस्तत्पुत्रान्स भाग इयात्। निर्बीजेषु निरपत्येषु संसृष्टेषु प्रमीतेषु स भाग इतरान् संसृष्टिन इयात् गच्छेदित्यर्थः।संसृष्टकाले यो यस्य भाग आसीत् स पुनर्विभागकाले प्रतिज्ञायमानस्तस्यैव रक्षणीय इति तु न पूर्वार्द्धार्थः। संसर्गे समीभाव एतादृशनियमे वाक्यस्यादृष्टार्थत्वापत्तेः।

शङ्खः—

भ्रातॄणामप्रजाःकश्चित्प्रेयाच्चेत्प्रव्रजेत वा।

विभजेरन्धनं तस्य शेषास्तु स्त्रीधनं विना ।
भरणं चास्य कुर्वीरन्स्त्रीणामा जीवनक्षयात् ॥
रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिद्युरितरासु तत् ।
या तस्य दुहिता तस्याः पित्रंशे भरणं मतम् ॥
आ संस्काराद्धरेद्भागं परतो बिभृयात्पतिः ।

शेषाः संसर्गिणः । इतरासु शय्यामरक्षन्तीषु च-व्यभिचारिणीष्वित्यर्थः । तत् स्त्रीधनम् । तेन व्यभि-चारिणीनां भरणं न कार्य्यम् । स्त्रीधनमपि प्रत्युत ग्राह्यम् । दुहिताऽत्र कुमारी । तेन तस्या भरणमारभ्य विवाहपर्यन्तं कार्यमित्यर्थः ।

कात्यायनः–

संसृष्टानां तु संसृष्टाः पृथक्स्थानां पृथक्स्थिताः ।
अभावेऽर्थहरा ज्ञेया निर्बीजान्योन्यभागिनः ॥

एकस्याभावे यदपरस्यार्थहरत्वमुक्तं तद्विशिनष्टि-निर्बीजेति । ते हि परस्परं निरन्वयाऽपरभागभाज इत्यर्थः । तदयं प्रकरणार्थ इति संक्षेपः । संसृष्टप्रमी-तस्य पूर्वविभागोत्तरजातपुत्रपौत्रप्रपौत्रान्यतमसत्त्वे स एव तद्भागभाक् । तदसत्त्वे तु सकलब्रह्मचर्य्यादिवि-शेषणसम्पन्नाष्टविधमैथुननिवृत्ता भार्या अन्या त्वव्य-भिचारिणी भरणीया न त्वंशहरा । तत्कन्यायास्तु विवाहपर्यन्तं कर्म भरणं च पितृधनेन कार्य्यम् । पितु-

रपि साधुभार्यावद्धरणमात्रम्। एतेषामसत्त्वे तु प्रमीतैकसंसृष्टिधनमपरः संसृष्टी सकलमेव लभते।सोदराऽसोदरसंसर्गे तु सोदर एव संसृष्टी लभते।असोदरमात्रसंसर्गे तु सोदरसत्त्वे सोदरासोदरौ तुल्यमेव लभेते। अन्यतरसत्त्वे अन्यतर एव। संसृष्टानां त्वेकतमस्य संसर्गोत्तरं विद्याद्यर्जिते सहजतोऽविभज्येप्यर्जकस्य द्व्यंशकत्वम्। संसृष्टयन्तराणामेकैकांशकत्वमिति।

प्रकाशे—

स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम्।
असंभूय सुतान्सर्वान्न दानं न च विक्रयः॥
ये जाता येप्यजाताश्च ये च गर्भे व्यवस्थिताः।
वृत्तिं च तेऽभिकांक्षन्ति न दानं न च विक्रयः॥

अस्यापवादः—

एकोपि स्थावरे कुर्याद्दानाधमनविक्रयम्।
आपत्काले कुटुम्बार्थे धर्मार्थे तु विशेषतः॥

विभक्तस्यापि स्थावरमपि साधारण्यामापदि तत्कन्यादानाद्यर्थं वा देयं विक्रेयं वेत्यर्थः।

मनुः—

विभक्ता ह्यविभक्ता वा दायादाः स्थावरे समाः।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये॥

एतद्विभक्तेष्वविभक्तत्वसंशये तन्निरासाय विभक्तस्याप्यनुमतिः कारयितव्येत्येतत्परम् ।

यत्तु–

स्वग्रामज्ञातिसामन्तदायादानुमतेन च ।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी ॥

तत्रापि ग्रामदायादज्ञात्यनुमतिर्दानप्रकाशनार्थम्। सामन्तानुमतिस्तु सीमावादनिरासाय । हिरण्योदकदानं तु ।

स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया ।

इति निषेधात् ।

भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥

इत्यादिदानप्रशंसादर्शनात् विक्रयेपि कर्त्तव्ये हिरण्यमुदकं च दत्वा दानरूपेणैव विक्रयः कार्य इत्येतत्परम् ।

## अथ विभागनिर्णयः ।

तत्र नारदः–

विभागधर्मसन्देहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्त्तनात् ॥
भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते ।
विभागे सति धर्मोऽयं भवेत्तेषां पृथक्पृथक् ॥

दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः ।
साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ॥
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ।
येषामेताः क्रिया लोके प्रवर्त्तन्ते हि ऋक्थिनाम् ।
विभक्तानभिगच्छेयुर्लेख्यमप्यन्तरेण तान् ॥

विभागरूपो धर्मो विभागधर्मः।ज्ञातयो विभागद्रष्टारः।भागलेख्यमक्षपत्रादि पृथक्कार्यम्।पृथगायव्यया विभागनान्तरीयकम्।धर्मो वैश्वदेवादिक्रिया।परस्परनैरपेक्षेण दानग्रहणम् । पशुः क्रयादि । अन्नोपादानं गृहं च पृथक् । क्षेत्रं च पृथक् । परिग्रहो बन्धकादेः। पाकधर्मः पार्वणादिः । आगमो धनार्जनादिः । व्ययो धनविनियोगः। तथा एकस्य ऋणादिप्रयोगे परः साक्षी चेत् प्रतिभूश्चेत् एकेन दत्तमपरश्चेद्गृह्णाति तदा तौ परस्परविभक्तौ ज्ञेयौ ।

याज्ञवल्क्यः—

विभागस्य तु सन्देहे ज्ञातिसाक्ष्यभिलेख्यकैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥

यौतकैः पृथग्भूतैः । यु अमिश्रण इति धात्वनुसारात् । तेन मिश्रैर्गृहैः क्षेत्रैश्च विभागभावना ज्ञेयेत्यर्थः । अनन्यथासिद्धमिदं पृथग्भूतगृहादिकं विभागमर्थापयतीति भावः ।

तथा–

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते तु न स्मृतम् ॥

एतेषां विभागात् । प्राक् परस्परं प्रातिभाव्यादिव्यवहारो नेत्यर्थः । ननु "जायापत्योर्न विभागो विद्यते" इत्यापस्तम्बवचनात्तयोर्विभागप्रसङ्ग एव नास्तीति चेत् । "जायापती अग्निमादधीयाताम्" इत्यादिनाऽग्न्याधाने सहाधिकारात् । तथा "मेखलया यजमानं दीक्षयति" "योक्त्रेण पत्नी" तथा "पत्न्याज्यमवेक्ष्यते" "यजमानो वेदं बध्नाति" इत्यादिश्रवणात्। तत्तदाधानजन्याग्निसाध्यकर्मसु श्रौतेषु तथा "कर्म स्मार्तं विवाहाग्नौ" इत्यादिश्रवणात् । जायापत्युभयसाध्यविवाहाग्निसाध्येषुस्मार्त्तकर्मस्वावसथ्यादिहोमेषु तयोः साहित्येनाधिकारस्तथैव तत्पुण्यजफलेष्वपि तयोः साहित्यं तत्प्रकरण एव"दिविज्योतिरजवमारभेत" इत्यादिश्रवणात् । न तत्तदन्यसाध्येष्विष्टापूर्त्तेषु । धनविभागस्तु तयोर्नास्तीति वाक्यार्थस्य शङ्कापि नास्ति । आपस्तम्बवचनस्याऽऽज्यावेक्षणप्रकरणे आम्नानात् । पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु चेति तद्वाक्यशेषात् । पत्न्यधिकरणे पत्न्या अपि पतिधने स्वत्वमुक्तमिति । तस्या अपि तर्हि पत्या

सह विभागो भवेद्यदि शाब्दस्तु निषेधो न स्यादिति चेत्। न।

"अधनास्त्रय एवैते भार्या दासस्तथा सुतः।"

इत्यादिना तस्या अधनोक्तेरित्यवेहि। पत्न्यधिकरणं त्विज्यामात्रे सहत्वेनाऽधिकारसिद्धयै न त्वधिकरणेन योषिदधनत्ववचनबाधः। तस्य न्यायत्वेन वचनावाधकत्वात्। विभागस्तु दम्पत्योः "पत्न्यः कार्याः समांशिकाः" इति वचनादिति रत्नाकरः।

बृहस्पतिः—

पृथगायव्ययधनाः कुसीदं च परस्परम्।

येऽन्योन्यं क्रयादिव्यवहारं कुर्वन्ति तेऽन्योन्यं विभक्ता वेदितव्या इत्यर्थः।

विभक्तिकृत्यमाह नारदः—

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः।
सम्यक्कर्मगुणोपेता न चेत्कृत्येषु सम्मताः॥

विभक्ताश्चेन्न संसृष्टास्तदा तेषां वैश्वदेवादिधर्माः। कुसीदादिक्रिया। परिपालनादिकं कर्म। शुश्रूषादिगुणः। एतत्सर्वं पृथक्कर्त्तुमर्हतीत्यर्थः।

विभागफलमाह स एव—

स्वभागान्यदि ते दद्युर्विक्रीणीयुरथापि वा।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै॥

## अथ क्रियाबलाबलम् ।

तत्र याज्ञवल्क्यः–

सर्वेष्वेव विवादेषु बलवत्युत्तरक्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वैव बलवत्तरा ॥

क्रिया अत्र समानजातीयाः ।

अत एव बृहस्पतिः–

द्विकेनार्थं समादाय प्रपन्नः पञ्चकं तु यः ।
लाभं तत्र प्रमाणं स्यात्पश्चिमं यद्धि निश्चितम् ॥

अस्यार्थः–

द्विकशतवृद्ध्या प्रागर्थमादाय ऋणिकः कयापि स्वकार्यतया पञ्चकं लाभं शते प्रपन्नस्तदा पश्चिमं प्रमाणमुत्तरा क्रिया प्रमाणमिति । अनयोश्च क्रिययोर्वृद्धिर्व्यवस्थात्वेन साजात्यमुत्तरक्रियाबलवत्त्वमौत्सर्गिकम् । अस्याऽपवादः । आध्यादौ तेन पुनराहितं पुनर्दत्तं पुनर्विक्रीतं च निवर्त्त्यमित्यर्थः । उपलक्षणं चैतत् । तेन दत्त्वा विक्रीतं निवर्त्त्यमस्वामिकृतत्वाविशेषात् । अत एव–

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारे यथा स्थितिः ॥

इति ।

बृहस्पतिः—

उत्तरोत्तरबन्धेन प्राग्बन्धः शिथिलो भवेत् ।
यः पश्चिमः क्रियाकारः स पूर्वाद्बलवत्तरः ॥
न्यासं कृत्वा परत्राधिं कृत्वा वाधिं करोति यः ।
विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा ॥

बन्धोऽत्र व्यवस्था । तेन पूर्वा व्यवस्था दुर्बला उत्तरा क्रिया बलवतीत्यर्थः।इदमेवोदाहरति—न्यासमित्यादि। प्रथमं न्यासमुत्तर आधिः । प्रथमं चाधिमुत्तरो विक्रयोऽपवदतीत्यर्थः । न्यासो धारणमात्रम् । आधिः परवशीकरणमित्यनयोराधिर्बलवान् । आध्यपेक्षया स्वत्वध्वंसफलिका क्रयादिरूपा क्रिया बलवती न तु बन्धकस्तदजनको बलवानिति विक्रयादेः पूर्वस्वत्वध्वंसफलकस्य पुनः करणे प्रथमो बलवान् । उदीच्यासाधारणस्वत्वलक्षणफलस्य पूर्वजातासाधारणपरस्वत्वलक्षणफलेनोत्पत्तिप्रतिबन्धात् । आध्याधेः पूर्वस्वत्वध्वंसाजनकस्य पुनः करणेप्येवं पूर्वस्वत्वध्वंसाजनकपूर्वस्वत्वध्वंसजनकयोस्तु चरमो बलवानिति समुदायार्थः । एवमेव व्याख्येयम् । व्यवहारोप्येवमपीति रत्नाकरोपि ।

आधिविक्रयदानानामन्तरालसौक्ष्म्येण पौर्वापर्यानिश्चये त्वाह स एव—

कृतं चेदकदिवसे विक्रयाधिप्रतिग्रहम् ।
त्रयाणामपि सन्देहे कथं तत्र विचारणा ॥
त्रीण्येव हि प्रमाणानि विभजेरन्यथांशतः ।
उभौ चार्थानुरूपेण विभागेन प्रतिग्रहः ॥

आधिधर्तृक्रेतृसम्प्रदानैस्तद्वस्तुसमांशेन विभज्य ग्राह्यमित्यर्थः। आधिधर्तुरत्रांशो लघीयान्, आधेर्हीनबलत्वादिति हलायुधः।

## अथ द्यूतसमाह्वयौ ॥ १७ ॥ १८ ॥

तत्र मनुः–

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

अप्राणिभिः पाशकाद्यैः ।

बृहस्पतिः–

अन्योन्यं परिगृहीता पक्षिमेषमृगादयः ।
प्रहरन्ते कृतपणास्तं वदन्ति समाह्वयम् ॥

मनुः–

प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥
द्यूतं समाह्वयं चैव यः कुर्याद्यश्च कारयेत् ।
तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

कात्यायनः—

द्यूतं नैव तु सेवेत क्रोधलोभविवर्द्धितम् ।
असाधुजननं क्रूरं नराणां द्रव्यनाशनम् ॥
ध्रुवं द्यूतात्कलिर्यस्माद्विषं सर्पमुखादिव ।
तस्माद्राजा निवर्त्तेत विषये व्यसनं हि तत् ॥

बृहस्पतिः—

द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् ।
तत्प्रवर्त्तितमन्यैश्च राजभागसमन्वितम् ।
सभिकाधिष्ठितं कार्यं तस्करज्ञापकं हि तत् ॥
एष एव विधिर्ज्ञेयः प्राणिद्यूतसमाह्वये ।

द्यूतं तावन्मनुना निषिद्धमन्यैस्तस्करनिरूपणार्थं तद्विहितम् । तदपि ससभिकं सराजपुरुषकमित्यर्थः ।

याज्ञवल्क्यः—

द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥

एकमुखं सभिकाख्यराजपुरुषाधिष्ठितम् ।

बृहस्पतिः—

द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात् ॥
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः ।

बृहस्पतिः—

ग्रहः प्रकोशः कर्त्तव्यो निर्वास्याः कूटदेविनः ॥

ग्रहो द्यूतपणः स व्यक्तः कर्त्तव्यः ।

नारदः-

अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः ।
न स तं प्राप्नुयात्कामं विनयं चैव सोर्हति ॥
परिहासकृतं यच्च यच्चाप्यविदितं नृपे ।
तत्रापि नाप्नुयात्कामं नियमं चैव सोर्हति ॥
अथवानुमतं तयोर्दापयेत्सकृदेव तु ॥
भक्ष्यभोज्यान्नपानानि स्वल्पान्यन्यानि कानि च ।
प्रीत्या तु सकृदाजीवेत्प्रसङ्गं तु विवर्जयेत् ॥

नियमो दण्डः ।

कूटाक्षदेविनः पापा राजभागहराश्च ये ।
गणानां वञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः॥

विष्णुः-

कूटाक्षदेविनां करच्छेदः।उपधिदेविनां सन्दंशच्छेदः। उपधिश्छद्म । संदंशोऽङ्गुष्ठतर्ज्जन्यौ ॥

याज्ञवल्क्यः-

राज्ञा सचिह्ना निर्वास्याः कूटाक्षोपधिदेविनः ।

दण्डचिह्नसंदंशच्छेदकरच्छेदनिर्वासनानि कूटाक्षदेविनामपराधलाघवगौरवानुसारेण ।

कात्यायनः-

राज्ञा प्रवर्त्तितान्धर्मान्यो नरो नानुपालयेत् ।

गर्ह्यः स पापो दण्ड्यश्च लोपयन्राजशासनम् ॥

## अथ प्रसंगाद्दण्डचिन्ता ।

तत्र मनुः—

तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥
तद्देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः ।
यथार्हतः संप्रणयेन्नरेष्वन्यायवृत्तिषु ॥
स राजा पुरुषो दण्डः स नेता शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एव हि रक्षति ।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः ॥

तथा—

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥

तदिति । तदर्थं धर्मं धर्मव्यवस्थापकम् । आदरार्थमभेदोपचारः । ब्रह्मतेजोमयं हिरण्यगर्भतेजःप्रकृतिकम्।इयमपि स्तुतिः।विषय ईश्वरः। राजा तु प्रजारञ्जनात् । पुरुषः परमपुरुषस्य प्रजानां हृदि स्थितत्वात् । नेता प्रभुः शासिता सुधर्मप्रवर्त्तयिता

जागर्त्ति। जागरितृकार्यंचौरादिनिराकरणकारित्वात्। यत्र श्यामो लोहिताक्षो दण्डो दण्डाधिष्ठातृदेवता चरति तत्र प्रजा विवर्द्धन्ते। नेता शासनकर्त्ता स चेद्विचारयति।

तथा–

शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा।
दण्डः प्रणयितुं शक्यः सुसहायेन धीमता॥
तस्याहुः संप्रणेतारं राजानं सत्यवादिनम्।
समीक्ष्य कारिणं प्राज्ञं धर्मकामार्थकोविदम्॥
असहायेन मूढेन लुब्धेनाऽकृतबुद्धिना।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च।
तं राजा प्रणयन्सम्यक्त्रिवर्गेणाऽभिवर्द्धते।
कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते॥
दण्डो हि सुमहत्तेजो दुर्द्धरश्चाऽकृतात्मभिः।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम्॥
ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम्।
अन्तरिक्षगतांश्चैव ऋषीन्देवांश्च पीडयेत्॥
समीक्ष्य सुधृतः सम्यक्सर्वा रञ्जयति प्रजाः।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः॥

समीक्ष्य कारिणं देशकालादि विमृष्य कारिणम्। मूढेन सम्यगुत्प्रेक्षाहीनेन। अकृतबुद्धिना अनभ्य-

स्तशास्त्रेण। कामात्मा स्वच्छन्दचारी। विषमः पक्षपातप्रयुक्तासच्चेष्टः। सुमहत्तेजः तीक्ष्णतया। ततः सबान्धवनृपहननानन्तरम्। सुधृतो यथार्हं धृतः।

तथा—

यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः।
शूले मत्स्यानिवाहन्युर्दुर्बलान्बलवत्तराः॥
अद्यात्काकः पुरोडाशं श्वावलिह्याद्धविस्तथा।
स्वाम्यं च न स्यात्कस्मिंश्चित्प्रवर्त्तेताऽधरोत्तरम्।

दण्ड्येषु दण्डार्हेषु। अधरोत्तरम् उत्कर्षापकर्षे वैपरीत्यम्।

तथा—

सर्वो दण्डजितो लोको दुर्लभो हि नरः शुचिः।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते॥
देवदानवगन्धर्वरक्षांसि पतगोरगाः।
तेपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः॥
दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः।
सर्वलोकप्रलोभश्च भवेद्दण्डस्य विभ्रमात्॥
सर्वतो धर्मषड्भागो भवत्यस्य हि रक्षतः।
यदधीते यद्यजते यद्ददाति यदर्चति॥
तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात्।
रक्षन्धर्मेण भूतानि राजा वध्यांश्च घातयन्॥

यजतेहरहर्यज्ञैः सहस्रशतदक्षिणैः ।

तदर्थमित्यादि पूर्वोक्तराजप्रयोजनार्थम्।समीक्ष्येति। शास्त्राऽनुसारेण कृतः श्रेयसे अन्यथा तु प्रणेतुरनिष्टाय स भवेदित्यर्थः । विभ्रमोऽन्यथाकरणमकरणं च । राजानं भूपम्।तेन भूपस्यैतत्प्रणयने इत्युक्तम् । कामात्मेत्यादि प्रकृते यद्यर्थः । बान्धवोऽत्र पुत्रः ।

तथा–

यस्य स्तेनः पुरे नास्ति नाऽन्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥
एतेषां निग्रहो राज्ञः पञ्चानां विषये स्वके ।
साम्राज्यकृतसाजात्ये लोके चैव यशस्करः ॥

इति महामहोपाध्यायसन्मिश्रश्रीवाचस्पतिविरचितो विवादचिन्तामणिः समाप्तः ॥ शुभम्भूयात् ।

---

पुस्तक मिलनेका ठिकाना–
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" छापाखाना–मुम्बई.

